in which a baked clod of clay, water, and honey have been added. This is a curative drink in dipsosis.

वटमातुलुङ्गवेतसपल्लवकुशकाशमूलयष्ट्याह्वैः ।
सिद्धेऽम्भस्यग्निनिभां कृष्णमृदं कृष्णसिकतां वा ॥४४॥
तप्तानि नवकपालान्यथवा निर्वाप्य पाययेताच्छम् ।
आपाकशर्करं वाऽमृतवल्ल्युदकं तृषां हन्ति ॥४५॥

वट- વડ बरगद मातुलुङ्ग- બીજોરું बिजौरा, वेतसपल्लव- વેતસપત્ર वेतसके पत्ते, कुश- કુશ कुश, काशमूल- કાશનાં મૂળ काशके मूल, यष्ट्याह्वैः तथा જેઠીમધથી तथा मुलहठीसे, सिद्धे પકાવેલાં सिद्ध किये हुए, अम्भसि પાણીમાં जलमें, अग्निनिभाम् અગ્નિમાં તપાવેલી હોવાથી અગ્નિ જેવી લાલ अग्निमें तप्त होनेके कारण अग्निके समान लाल, कृष्णमृदम् કાળી માટી काली मिट्टी, कृष्णसिकताम् वा કે કાળી રેતી या काली वालु, अथवा અથવા या, तप्तानि તપાવેલાં तपाये हुए, नवकपालानि નવાં ઠીકરાં नवीन मिट्टीके कपाल, निर्वाप्य બુઝાવી बुझाकर, अच्छम् નીતર્યું પાણી निताश हुआ जल, पाययेत પાવું पिलावे, आपाक- અથવા પકાવવા માટે या सिद्ध करनेके लिए, शर्कर જેમાં તપેલા કાંકરા નાખવામાં આવ્યા છે એવું जिसमें तप्त कंकर डाले गये हैं ऐसा, अमृतवल्ल्युदकम् वा ગળોનું જલ गुडूचीका जल, तृष्णाम् તૃષ્ણાને तृषाको, हन्ति હણે છે नष्ट करता है ॥ ४४-४५ ॥

44-45. In the water prepared with sprouts of banyan, pomello, country willow, roots of sacrificial and thatch grass and liquorice, put a lump of black earth or black sand or pieces of new earthen vessel which have been heated red and allow it to cool; then decant the clear water and give it to the patient; or give the water prepared with guduch added with red-hot pebbles and cooled. It is curative of dipsosis

क्षीरवतां मधुराणां शीतानां शर्करामधुविमिश्राः ।
शीतकषाया मृद्भृष्टसंयुताः पित्ततृष्णाघ्नाः ॥४६॥

मृद्भृष्ट- તપાવેલી માટી तपाई हुई मिट्टीसे, संयुताः યુક્ત युक्त, क्षीरवताम् ક્ષીરીવૃક્ષ क्षीरीवृक्ष, मधुराणाम् મધુરદ્રવ્યો मधुर, शीतानाम् અને શીતવીર્ય દ્રવ્યોના और शीतवीर्य द्रव्योंके, शर्करा- સાકર चीनी, मधु-विमिश्राः અને મધ મેળવેલા और शहद मिलाये हुए, शीतकषायाः શીતળ કષાયો शीत कषाय, पित्ततृष्णाघ्नाः પિત્તજન્ય તૃષ્ણા હરનાર છે पित्तजन्य तृषाके नाशक हैं ॥ ४६ ॥

46. The cold infusions prepared of the drugs of the lactiferous plants and drugs of sweet group and of cold potency, mixed with sugar and honey and with baked clay put into them, are curative of dipsosis of the pitta type.

कफजतृष्णायाः चिकित्सा—

व्योषवचाभल्लातकतिक्तकषायास्तथाऽऽमतृष्णाघ्नाः
यच्चोक्तं कफजायां वम्यां तच्चैव कार्यं स्यात् ॥४७॥

तथा તથા तथा, व्योष- ત્રિકટુ त्रिकटु, वचा- વજ वचा, भल्लातक- ભિલામાં भिलावा, तिक्तकषायाः અને તિક્ત દ્રવ્યોના ક્વાથ और तिक्त द्रव्योंके कषाय, आमतृष्णाघ्नाः આમતૃષ્ણાના નાશક છે आमतृष्णाके नाशक हैं, कफजायाम् કફજન્ય कफजन्य, वम्याम् ઉલટીમાં वमनमें, यत् च જે કાંઈ जो कुछ, उक्तम् કહ્યું છે कहा है, तत् च एव ते પણ वह भी, कार्यम् स्यात् અહીં કરવું यहां करे ॥ ४७ ॥

४४ सिद्धेऽम्भस्यग्निनिभां—सिद्धेऽम्भस्यग्निनिभाः (ग.)
४५. पाययेताच्छम्—पाययेत्तोयम् (ब.)
,, आपाकशर्करं वाऽमृतवल्ल्युदकं तृषां हन्ति—अथवाकशर्करामृत-वल्ल्युदकं वा तृषं हन्ति (क. ब. ग. ड. त. द.)

४६. पित्ततृष्णाघ्नाः—पित्ततर्षघ्नाः (क.)
४७. आमतृष्णाघ्नाः—आमतृष्णानाशाः (क.)

47. In dipsosis due to chyme morbidity the decoctions of the three spices, sweet flag, marking nut and drugs of the bitter group prove beneficial; or the line of treatment, indicated in vomiting of the kapha type, may be given.

**स्तम्भारुच्यविपाकालस्यच्छर्दिषु कफानुगां तृष्णाम्।**
**ज्ञात्वा दधिमधुतर्पणलवणोष्णजलैर्वमनमिष्टम् ४८**

स्तम्भ- જકડાટ स्तब्धता, अरुचि- અરુચિ अरुचि, अविपाक- અવિપાક अविपाक, आलस्य- આળસ आलस्य, छर्दिषु અને ઉલટી થતાં और छर्दि होने पर, तृष्णाम् તૃષ્ણાને तृष्णाको, कफानुगाम् કફાનુબન્ધી कफके साथ अनुबन्धवाली, ज्ञात्वा જાણીને जानकर, दधि-मधु- દહીં, મધ दही, मधु, तर्पण-लवण- તર્પણ, લવણ तर्पण, नमक, उष्णजलैः અને ઉષ્ણ જળથી और गरम जलसे, वमनम् વમન કરાવવું वमन कराना, इष्टम् ઇષ્ટ છે इष्ट है ॥ ४८ ॥

48. Knowing that rigidity, anorexia indigestion, lethargy and vomiting are the sequela of the kapha type of dipsosis, it is desirable to induce vomiting by a dose prepared of curds, honey, demulcent drink, salt and warm water.

**दाडिममम्लफलं वाऽप्यन्यत् सकषायमथ लेहम्।**
**पेयमथवा प्रदद्याद्रजनीशर्करायुक्तम् ॥४९॥**

४९. दाडिम....शर्करायुक्तम्—दाडिममदनफलं वाप्यन्यतमकषाय-मथ लेहम्। पेयमथवा हरिद्राम्बुशर्कराक्षौद्रसंयुक्तम् (ख.)
" " " —सकषायलोहलवणं दाडिममम्लं फलं च लेह्यं वा। पेयमथवा हरिद्राम्बु शर्कराक्षौद्रसंयुक्तम् (क.)
" दाडिममम्लफलं - दाडिममदनफलं (ध. ङ.)
" वाऽप्यन्यत् सकषायमथ—वाप्यन्यतमकषायमथ (ध.)
" प्रदद्याद्रजनीशर्करायुक्तम्—हरिद्राम्बुशर्कराक्षौद्रसंयुक्तम् (क. ब. ज. ड. स. ध.)
" रजनी—रजनीमधु (द.)

दाडिमम् દાડમ अनार, अन्यत् અથવા બીજું या दूसरा, अम्लफलम् वा अपि ખાટું ફળ खट्टा फल, अथ सकषायम् અથવા કષાયસહિત अथवा कषायसहित, लेहम् લેહ लेह, अथवा અથવા अथवा, रजनी હળદર हल्दी, शर्करायुतम् તથા સાકરયુક્ત तथा चीनीके साथ, पेयम् પેય पेय, प्रदद्यात् આપવું देना चाहिये ॥ ४९ ॥

49. The physician may give pomegranate or other sour fruit or the linctus mixed with astringent substances or he may give a potion containing turmeric and sugar.

क्षयजतृष्णायाः चिकित्सा—

**क्षयकासेन तु तुल्या क्षयतृष्णा सा गरीयसी नृणाम्।**
**क्षीणक्षतशोषहितैस्तस्मात्तां भेषजैः शमयेत् ॥५०॥**

क्षयतृष्णा ક્ષયજન્ય તૃષ્ણા क्षयजन्य तृष्णा, क्षयकासेन तु ક્ષયજન્ય કાસની क्षयज कासके, तुल्या સમાન છે समान है, सा તે वह, नृणाम् મનુષ્યોને मनुष्योंको, गरीयसी ભયજનક છે भयजनक है, तस्मात् તેથી इस लिए क्षीणक्षत- ક્ષીણ- ક્ષત क्षीण- क्षत, शोषहितैः અને શોષમાં હિતકર્તા और शोषमें हितकारी, भेषजैः ઔષધોથી औषधोंसे, ताम् તેને उसको शमयेत् શાંત કરવી शान्ति करनी चाहिए ॥ ५० ॥

50. Dipsosis in men, born of wasting is equally serious like the cough due to wasting; therefore this variety of thirst should be quieted with medications indicated in the condition of cachexia due to pectoral lesions and consumption.

मद्यजतृष्णायाः चिकित्सा—

**पानतृष्णार्तः पानं त्वर्धोदकमम्ललवणगन्धाढ्यम्।**
**शिशिरस्नातः पानं मद्याम्बु गुडाम्बु वा तृषितः ५१**

५१ त्वर्धोदकमम्ललवणगन्धाढ्यम्—त्वर्धोदकमम्ललवणसंभाव्यम (ध.)
" शिशिरस्नातः—शिशिरस्नानम् (ध.)

भक्तोपरोधतृषितः स्नेहतृषार्तोऽथवा तनुयवागूम् ।
प्रपिबेद्गुरुणा तृषितो भुक्तेन तदुद्धरेद्भुक्तम् ॥५२॥

पानतृषार्तः तु मद्यपानजन्य तृष्णाथी पीडायेला रोगीए तो मद्यपानसे उत्पन्न तृषासे पीड़ित रोगी तो, अर्धोदकम् अर्धो जलथी मिश्रित आधे जलसे मिश्रित, अम्ल-लवण- अम्ल लवण अम्ल, नमकीन, गन्धाढ्यम् अने गंध द्रव्यवाळुं तथा सुगन्धित द्रव्योंसे युक्त, पानम् मद्य पीवुं मद्य पीवे, शिशिरस्नातः ठंडा पाणीथी स्नान करवाने लीधे शीतल पानीसे स्नान करने पर, तृषितः तरस्या मनुष्ये तृषा उत्पन्न हो तो, मद्याम्बु मद्यमां भेळवेलुं जळ मद्यमें मिलाया हुआ जल, गुडाम्बु वा के गोळनुं पाणी या गुड़का पानी, पानम् पीवुं पीवे, भक्तोपरोध- लंघनथी लंघनसे उत्पन्न, तृषितः तरस्या मनुष्ये तृषामें अथवा अथवा अथवा, स्नेहतृषार्तः स्नेहपान करवाथी तरस्या मनुष्ये स्नेहपानजन्य तृषामें, तनु पातळी पतली, यवागूम् यवागू यवागू, प्रपिबेत् पीवी पीवे, गुरुणा भारे गुरु, भुक्तेन भोजनथी भोजनसे उत्पन्न, तृषितः तरस्या मनुष्ये तृषामें, तत् ते उस, भुक्तम् भोजननुं भोजनका, उद्धरेत् वमन करवुं वमन करे ॥ ५१-५२ ॥

51-52. In dipsosis due to alcoholism, a potion of wine diluted with equal amount of water mixed with acid, salt and a liberal quantity of fragrant substances is recommended. In thirst immediately after a cold bath, a drink of diluted wine or gur-water is recommended. If thirst is due to abstinence from food or to ingestion of unctuous diet, the patient may take thin medicated gruel; if the thirst is due to a heavy meal, the patient may vomit out the food ingested.

मद्याम्बु वाऽम्बु कोष्णं बलवांस्तृषितः समुल्लिखेत् पीत्वा ।
मागधिकाविशदमुखः सशर्करं वा पिबेन्मन्थम् ५३

तृषितः गुरु भोजनथी तरस्या गुरुभोजनसे तृषायुक्त, बलवान् बळवान मनुष्ये बलवान मनुष्य, मद्याम्बु मद्यमिश्र पाणी मद्यमिश्रित जल, कोष्णम् अथवा नवशेकुं या सुहाता हुआ गरम, अम्बु वा पाणी जल, पीत्वा पीने पीकर, समुल्लिखेत् वमन करवुं वमन करे, मागधिका- अथवा पीपरथी अथवा पिप्पलीके चूर्णसे, विशदमुखः मुखने चोकाश वगरनुं करी मुखको विशद करके, सशर्करम् साकरयुक्त शर्करायुक्त, मन्थम् वा मन्थ मन्थ, पिबेत् पीवो पीवे ॥ ५३ ॥

53. And if the vitality of the patient be strong, he may drink a dose of wine and water, or warm water before vomiting or having cleansed the mouth with long pepper, he may take a demulcent drink with sugar.

बलवांस्तु तालुशोषे पिबेद्घृतं तृष्यमद्याच्च ।
सर्पिर्भृष्टं क्षीरं मांसरसांश्चाबलः स्निग्धान् ॥५४॥

तालुशोषे तालुशोषमां तालुशोषमें, बलवान् तु बळवान पुरुषे तो बलवान् पुरुष तो, घृतम् घी घृत, पिबेत् पीवुं पीवे, तृष्यम् च अने तृषामां हितकर और तृषानाशक, अद्यात् भोजन करवुं भोजन खावे, अबलः च अने निर्बल मनुष्ये और अबल मनुष्य, सर्पिर्भृष्टम् घीथी संस्कार आपेलुं घीमें भूने, क्षीरम् दूध दूधको, स्निग्धान् अथवा स्निग्ध या स्निग्ध, मांसरसान् च मांसरसो पीवा मांसरसोंको पीवे ॥ ५४ ॥

54. If the thirsty patient is strong and suffers from parching of the palate he may drink adipsous ghee, or use it in his food; if the patient is weak, he may take milk seasoned with ghee or unctuous meat-juice.

५२. भुक्तेन तदुद्धरेद्भुक्तम्-भुक्तेनोद्धरेद् भुक्तम् (ब.)

५४. तृष्यम्-तृष्यमन्नम् (क.)
,, तृष्यमद्याच्च-तृष्यमन्नमद्याच्च (क.)
,, ,, -तृष्यमनुमद्यम् (ख. ब. ज. झ. ड. त.)

अतिरूक्षदुर्बलानां तर्षं शमयेन्नृणामिहाशु पयः ।
छागो वा घृतभृष्टः शीतो मधुरो रसो हृद्यः ॥५५॥

इह અહીં यहां, अतिरूक्ष- અતિશય રૂક્ષ अतिरूक्ष, दुर्बलानाम् અને દુર્બલ और दुर्बल, नृणाम् મનુષ્યોની मनुष्यकी, तर्षम् તૃષા तृष्णाको, पयः દૂધ दूध, आशु એકદમ शीघ्र शमयेत् શમાવે છે शान्त करता है, घृतभृष्टः અથવા ઘીથી સંસ્કાર આપેલ अथवा घीमें भूने, छागः બકરાનો वकरेका, शीतः શીતળ शीतल, मधुरः અને મધુર और मधुर, रसः वा માંસરસ मांसरस, हृद्यः હૃદય માટે હિતકર છે हृदयके लिए हितकर है ॥ ५५ ॥

55. The thirst in persons who are extremely dehydrated and weak gets immediately quenched by taking milk or the cool and sweet meat-juice of the goat seasoned with ghee is a cordial drink.

स्निग्धेऽन्ने भुक्ते या तृष्णा स्यात्तां गुडाम्बुना शमयेत् ।
तर्षं मूर्च्छाभिहतस्य रक्तपित्तापहैर्हन्यात् ॥५६॥

स्निग्धेऽन्ने સ્નિગ્ધ ભોજન स्निग्ध अन्न, भुक्ते જમ્યાથી भोजन करने पर, या જે जो, तृष्णा તૃષા तृषा, स्यात् થાય છે उत्पन्न होवे, ताम् તેને उसको, गुडाम्बुना ગોળના પાણીથી गुडके जलसे, शमयेत् શાંત કરવી शान्त करनी चाहिए, मूर्च्छाभिहतस्य મૂર્છાપીડિતની मूर्च्छासे पीडित मनुष्यकी, तर्षम् તૃષાને तृषाको, रक्तपित्तापहैः રક્તપિત્તહર ઔષધોથી रक्तपित्तनाशक द्रव्योंसे, हन्यात् હણવી शान्त करनी चाहिए ॥ ५६ ॥

56. The thirst resulting from eating unctuous food should be quenched with gur-water; and the thirst in a person who has fainted should be cured by medications curative of hemothermia

शीतमुष्णं च जलं कुत्र देयं कुत्र वा वर्ज्यम्—

तृड्दाहमूर्च्छाभ्रमक्लममदात्ययास्रविषपित्ते ।
शस्तं स्वभावशीतं, शृतशीतं सन्निपातेऽम्भः ॥५७॥

तृट्- તૃષ્ણા તૃષા, दाह- દાહ दाह, मूर्च्छा- મૂર્છા मूर्च्छा, भ्रम- ભ્રમ भ्रम, क्लम- ક્લમ क्लम, मदात्यय- મદાત્યય मदात्यय, अस्र- રક્તપિત્ત रक्तपित्त, विष- વિષ विष, पित्ते અને પિત્તમાં और पित्तमें, स्वभावशीतम् સ્વાભાવિક શીતલ પાણી स्वाभाविक शीतल जल, सन्निपाते અને સન્નિપાતમાં और सन्निपातमें, शृतशीतम् શૃતશીત शृतशीत, अम्भः પાણી जल, शस्तम् પ્રશસ્ત છે अच्छा है ॥ ५७ ॥

57. In dipsosis, burning, fainting, giddiness, exhaustion, alcoholism, vitiation of blood and toxicosis, and disorders of pitta and fresh cold water is beneficial, while in the condition of tridiscordance, water boiled and cooled is good.

हिक्काश्वासनवज्वरपीनसघृतपार्श्वगलरोगे ।
कफवातकृते स्त्याने सद्यःशुद्धे च हितमुष्णम् ॥५८॥

कफवातकृते કફવાતજન્ય कफवातकृत, हिक्का- હેડકીમાં हिक्कामें, श्वास- શ્વાસમાં श्वासमें, नवज्वर- નવજ્વરમાં नवज्वरमें, पीनस- પીનસ पीनसमें, घृतपीत-पार्श्व-गलरोगे પાર્શ્વરોગમાં તથા ગળાના રોગમાં ઘીનુ પાન કર્યા પછી તુરત જ पार्श्वरोगमें तथा गलेके रोगमें घृतका पान करनेके तत्काल पश्चात्, स्त्याने દોષોના ઘટ્ટપણામાં दोषोंके घना होनेमें, सद्यःशुद्धे च અને વમન વિરેચન વગેરેથી રોગીનુ શોધન થયા પછી તરત જ

५६. अस्माच्छ्लोकानन्तरम्—
शीतमुष्णञ्च जलं कुत्र देयं वर्ज्यं वा कुत्रेत्याह इति (ङ. त.) पुस्तकयोः पठ्यते ।
,, तां गुडाम्बुना शमयेत्—तंडुलाम्बुना शमयेत् (थ.)

५७. तृड्दाह—तृट्छर्दिदाह (क. थ.)
,, ,, —छर्द्यम्लदाह (ग. द. ध.)
,, तृड्दाहमूर्च्छाभ्रमक्लम—छर्द्यम्लदाहमूर्च्छातमःक्लम (ख. त)
५७. भ्रम—भ्रमः (ब.)
,, सन्निपातेऽम्भः—सन्निपाते तु (थ.)

और वमन विरेचन आदिसे रोगीके शोधन होनेके तत्काल पश्चात्, उष्णम् ઉષ્ણ જલ गरम जल, हितम् હિતકર્તા છે हितकर है ॥ ५८ ॥

58. In conditions of hiccup, dyspnea, recent fever, coryza, excessive ingestion of ghee, pleurodynia and disorders of the throat caused by kapha and vata, or when the humors are still congested in the body and just after the purificatory treatment, a drink of warm water is beneficial.

**पाण्डूदरपीनसमेहगुल्ममन्दानलातिसारेषु ।**
**प्लीह्नि च तोयं न हितं काममसह्ये पिबेदल्पम् ॥५९॥**

पाण्डु- પાંડુરોગ पाण्डुरोग, उदर- ઉદરરોગ उदर, पीनस- પીનસ पीनस, मेह- પ્રમેહ प्रमेह गुल्म- ગુલ્મ गुल्म, मन्दानल- અગ્નિમાંદ્ય मन्दाग्नि, अतिसारेषु અતિસાર अतिसार, प्लीह्नि च અને પ્લીહારોગમાં और प्लीहारोगमें तोयम् જલ जल न हितम् હિતકર નથી हितकारक नहीं है, असह्ये અસહ્ય તૃષામાં असह्य प्यासमें कामम् ભલે भले, अल्पम् થોડું પાણી थोड़ा जल, पिबेत् પીવું पीवे ॥ ५९ ॥

59. In anemia, abdominal diseases, coryza, urinary diseases, gulma, weak gastric fire, diarrhea and splenic disorders the drinking of water is not beneficial; but if the thirst be unbearable, the patient may drink a small quantity of water.

**पूर्वामयातुरः सन् दीनस्तृष्णार्दितो जलं काङ्क्षन् ।**
**न लभेत स चेन्मरणमाश्वेवाप्नुयाद्दीर्घरोगं वा ॥६०॥**

पूर्वामयातुरः सन् જો પહેલાં કહેલા રોગોવાળો પુરુષ यदि पूर्वोक्त रोगोंवाला पुरुष, तृष्णार्दितः તૃષાથી પીડાઈ तृषासे पीड़ित होकर, जलम् काङ्क्षन् જલની ઇચ્છા રાખતો હોય जलकी इच्छा रखता हो, न लभेत चेत् પણ તેને જળ ન મળે તો परन्तु उसको जल न मिले तो, आशु एव તે શીઘ્ર જ वह शीघ्र ही, मरणम् મરણને मृत्यु, दीर्घरोगम् वा કે દીર્ઘરોગને या दीर्घरोगको, प्राप्नुयात् પામે છે प्राप्त करता है ॥ ६० ॥

60. For if the patient who is suffering from the above-mentioned diseases has become miserably afflicted with thirst and craving for water does not get it he may soon die or be afflicted with chronic illness.

**तस्माद्धान्याम्बु पिबेत्तृष्यन् रोगी सशर्कराक्षौद्रम् ।**
**यद्वा तस्यान्यत्स्यात् सात्म्यं रोगस्य तच्चेष्टम् ॥६१॥**

तस्मात् તેથી इस लिए, तृष्यन् તરસ્યા तृषा होने पर, रोगी રોગીએ रोगी, सशर्करा- સાકર शर्करा, क्षौद्रम् અને મધયુક્ત और मधु मिलाकर, धान्याम्बु ધાણાનું પાણી धान्याम्बु, पिबेत् પીવું पीवे तत् અથવા તે अथवा उस, रोगस्य રોગને માટે रोगके लिए, यत् अन्यत् वा જે બીજું કોઈ जो दूसरा कोई, सात्म्यम् સાત્મ્ય सात्म्य, स्यात् હોય हो, तत् च તે वह, इष्टम् પીવું ઇષ્ટ છે पीना इष्ट है ॥ ६१ ॥

61. Therefore the thirsty patient may drink coriander-water mixed with honey and sugar, or whatever other medicated water is wholesome in his condition.

तृष्णायाः शीघ्रप्रतिकार्यत्वम्—

**तस्यां विनिवृत्तायां तज्जन्य उपद्रवः सुखं जेतुम् ।**
**तस्मात्तृष्णां पूर्वं जयेद्बहुभ्योऽपि रोगेभ्यः ॥६२॥**

तस्याम् તે तृषाके विनिवृत्तायाम् મટતાં निवृत्त होने पर, तत्- તેનાથી उससे, जन्यः થયેલ उत्पन्न हुए, उपद्रवः ઉપદ્રવ उपद्रवको जेतुम् सुखम् સુખેથી જીતાય છે जीतना सरल है तस्मात् તેથી इस लिए, बहुभ्यः બહુ बहुतसे, रोगेभ्यः अपि રોગોમાં પણ रोगोंमें भी, पूर्वम् પ્રથમ पहले, तृष्णाम् તૃષ્ણાને तृष्णाको, जयेत् જીતવી जीते ॥ ६२ ॥

६०. न लभेत स चेन्मरणम्—लभते मरणं शीघ्रम् (ब.)

62. If dipsosis is cured, it is easy to subdue the complications arising from it; therefore dipsosis, of all diseases, should be first treated.

अध्यायोक्तार्थसंग्रहः—

**तत्र श्लोकः—**

**हेतू यथाऽग्निपवनौ कुरुतः सोपद्रवां च पञ्चानाम्।**
**तृष्णानां पृथगाकृतिरसाध्यता साधनं चोक्तम् ६३**

**तत्र** ते विषयमां इस विषयमें, **श्लोकः** ઉપસંહારનો શ્લોક છે કે उपसंहारका श्लोक है कि, **यथा** જેવી રીતે जैसे, **अग्निपवनौ** અગ્નિ અને વાયુ अग्नि और वायु, **हेतू** કારણો कारण बनकर **सोपद्रवाम्** ઉપદ્રવસહિત उपद्रवयुक्त, **कुरुतः** તૃષ્ણા પેદા કરે છે એ तृष्णाको उत्पन्न करते हैं वह, **पञ्चानाम्** તથા પાંચ तथा पांच, **तृष्णानाम्** તૃષ્ણાઓનાં तृष्णाओंके, **पृथक्** જુદાં જુદાં पृथक् पृथक्, **आकृतिः** લક્ષણ लक्षण, **असाध्यता** અસાધ્યતા असाध्यता, **साधनम्** **च** અને ચિકિત્સા और चिकित्सा, **उक्तम्** કહ્યાં છે कह दिये हैं ॥ ६३ ॥

Here is the recapitulatory verse—

63. How the thermal factors and the vata are the two causative factors for the five kinds of dipsosis, their separate characteristics, the incurable condition and the method of cure have all been described.

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते चिकित्सास्थाने तृष्णारोगचिकित्सितं नाम द्वाविंशोऽध्यायः ॥२२॥**

**इति** આ પ્રમાણે इस प्रकार, **अग्निवेशकृते** અગ્નિવેશે રચેલા अग्निवेशसे बनाये, **चरकप्रतिसंस्कृते** **तन्त्रे** અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, **अप्राप्ते** અપ્રાપ્ત अप्राप्त, **दृढबलसंपूरिते** અને દૃઢબલે પૂરા કરેલ और दृढबलसे पूरित किये गये, **चिकित्सास्थाने** ચિકિત્સાસ્થાન વિષે चिकित्सास्थानमें, **तृष्णारोगचिकित्सितम्** 'તૃષ્ણારોગ-ચિકિત્સિત' 'तृष्णारोगचिकित्सित', **नाम** નામનો नामका, **द्वाविंशः** બાવીસમો बाईसवाँ, **अध्यायः** અધ્યાય સંપૂર્ણ થયો અધ્યાય समाप्त हुआ ॥ २२ ॥

22. Thus in the Section on Therapeutics in the treatise compiled by Agnivesa and revised by Caraka, the twenty-second chapter entitled "The Therapeutics of Dipsosis" not being available, the same as restored by Dridhabala, is completed.

---

# त्रयोविंशोऽध्यायः ।

## ત્રેવીસમો અધ્યાય अध्याय तेईसवाँ

## Chapter XXIII

विषचिकित्सितोपक्रमः—

**अथातो विषचिकित्सितं व्याख्यास्यामः ॥१॥**
**इति ह स्माह भगवानात्रेयः ॥२॥**

**अथ अतः** હવે અહીંથી अब आगे, **विषचिकित्सितम्** 'વિષચિકિત્સિત' નામના અધ્યાયનું 'विषचिकित्सित' नामके अध्यायका, **व्याख्यास्यामः** વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

**भगवान्** ભગવાન भगवान, **आत्रेयः** આત્રેયે आत्रेयने, **इति ह** આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, **आह स्म** કહેલું છે कहा है ॥ २ ॥

1. We shall now expound the chapter entitled 'The Therapeutics of Toxicosis."

2. Thus declared the worshipful Atreya.

**प्रागुत्पत्तिं गुणान् योनिं वेगाँल्लिङ्गान्युपक्रमान् ।**
**विषस्य ब्रुवतः सम्यगग्निवेश निबोध मे ॥ ३॥**

**अग्निवेश** હે અગ્નિવેશ! हे अग्निवेश!, **विषस्य** વિષની विषकी, **प्रागुत्पत्तिम्** પૂર્વોત્પત્તિ प्रथम उत्पत्ति,

६३. पृथगाकृतिः–पुनराकृतिः (ब.)

३. सम्यगग्निवेश निबोध मे–सम्यगग्निवेशावधारय (क.)

गुणान् ગુણ गुण, योनिम् યોનિ योनि, वेगान् વેગ वेग, लिङ्गानि લક્ષણો। लक्षण, उपक्रमान् અને ચિકિત્સા और उपक्रमको, ब्रुवतः મે કહેતા એવા મારી પાસેથી कहते हुए मुझसे, सम्यक् સારી રીતે अच्छी तरह, निबोध સાંભળો। सुनो ॥ ३ ॥

3. Listen O, Agnivesa! attentively as I describe to you the primogenesis, the properties, the source, the stages of virulence, the symptoms and the therapeutics of toxicosis.

विषस्य प्रागुत्पत्तिः, निरुक्तिश्च—

**अमृतार्थे समुद्रे तु मथ्यमाने सुरासुरैः ।**
**जज्ञे प्रागमृतोत्पत्तेः पुरुषो घोरदर्शनः ॥४॥**
**दीप्ततेजाश्चतुर्दंष्ट्रो हरिकेशोऽनलेक्षणः ।**
**जगद्विषण्णं तं दृष्ट्वा तेनासौ विषसंज्ञितः ॥५॥**

अमृतार्थम् અમૃતને માટે अमृतप्राप्तिके लिए, सुरासुरैः દેવતા અને રાક્ષસોથી देवता और राक्षसोंसे, समुद्रे સમુદ્રનું समुद्रका, मथ्यमाने तु મન્થન થતું હતું ત્યારે मंथन होने पर, अमृतोत्पत्तेः અમૃતની ઉત્પત્તિ अमृतोत्पत्तिके, प्राक् પહેલાં पूर्व, घोरदर्शनः ભયંકર દેખાવવાળો देखनेमें भयानक, दीप्ततेजाः પ્રદીપ્ત તેજવાળો। प्रदीप्त तेजवाला, चतुर्दंष्ट्रः ચાર દાઢોવાળો। चार दाढ़वाला, हरिकेशः પિંગળા વાળવાળો। पिंगल बालोंवाला, अनलेक्षणः અને અગ્નિ જેવાં નેત્રવાળો। और आग जैसी आंखोंवाला, पुरुषः પુરુષ पुरुष, जज्ञे પેદા થયો। उत्पन्न हुआ, तम् તેને उसको, दृष्ट्वा જોઈ देखकर, जगत् જગત जगत, विषण्णम् વિષણ્ણ (ખિન્ન) થયું विषण्ण (खिन्न) हुआ, तेन તેથી इस लिए, असौ તે वह, विषसंज्ञितः 'વિષ' એ નામથી કહેવાય છે 'विष' इस नामसे कहा जाता है ॥ ४-५ ॥

४. अमृतार्थं समुद्रे तु मथ्यमाने सुरासुरैः—मथ्यमाने जलनिधावमृतार्थं सुरासुरैः (थ. फ.)
५. हरिकेशो- हरित्केशो (फ.)
,, तेनासौ विषसंज्ञितः—विषं स तु विषादनात् (थ. भ.)

4-5. When the ocean was being churned by the gods and the demons for the sake of ambrosia there emerged prior to the nectar, a fearful looking person. He had a resplendent appearance, four fangs, tawny hair and fiery eyes and the world despaired at the sight of him. Hence he was known as 'Visha' poison, the despair of the world.

विषस्य योनिप्रभावादि—

**जङ्गमस्थावरायां तद्योनौ ब्रह्मा न्ययोजयत् ।**
**तदम्बुसंभवं तस्माद् द्विविधं पावकोपमम् ॥६॥**
**अष्टवेगं दशगुणं चतुर्विंशत्युपक्रमम् ।**

ब्रह्मा બ્રહ્માએ ब्रह्माने, तत् તેને उसको, जङ्गम- જંગમ जङ्गम, स्थावरायाम् અને સ્થાવર और स्थावर, योनौ યોનિમાં योनिमें, न्ययोजयत् નિયુક્ત કર્યું नियुक्त कर दिया, तस्मात् તેથી इस लिए, अम्बुसंभवम् જલમાંથી પેદા થયેલું जलसे उत्पन्न, तत् તે વિષ वह विष, द्विविधम् બે પ્રકારનું दो प्रकारका, पावकोपमम् અગ્નિ જેવું अग्नि जैसा, अष्टवेगम् આઠ વેગવાળું आठ वेगवाला, दशगुणम् દશ ગુણવાળું दस गुणवाला, चतुर्विंशति- અને ચોવીસ और चौबीस, उपक्रमम् ઉપક્રમવાળું છે उपक्रमवाला है ॥ ६½ ॥

6-6½. Brahma deposited this poison in two places, namely, the mobile and immobile things of his creation. Thus the poison born of the sea became of two types. It resembles fire and has eight stages of virulence, ten qualities and twenty-four modes of treatment.

वर्षासु विषस्य तीक्ष्णत्वं, शरदि मन्दवीर्यत्वं च—

**तद्वर्षास्वम्बुयोनित्वात् संक्लेदं गुडवद्गतम् ॥७॥**

**सर्पत्यम्बुधरापाये तदगस्त्यो हिनस्ति च ।**
**प्रयाति मन्दवीर्यत्वं विषं तस्माद्घनात्यये ॥ ८॥**

अम्बु- જલ जल, योनित्वात् યોનિ હોવાથી योनि होनेसे, वर्षासु વર્ષા ઋતુમાં वर्षा ऋतुमें, गुडवत् ગોળની પેઠે गुडके समान, संक्लेदम् ક્લેદને क्लेदको, गतम् પ્રાપ્ત થતાં प्राप्त हुआ, तत् તે वह, सर्पति પ્રસરે છે फैलता है, अम्बुधरापाये વાદળાં નષ્ટ થતાં मेघोंके हटजाने पर, अगस्त्यः અગસ્ત્ય अगस्त्यका तारा, तत् તેને उसको, हिनस्ति च નાશ કરે છે नष्ट करता है, तस्मात् તેથી इस लिए, घनात्यये શરદ્ ઋતુમાં शरद ऋतुमें, विषम् વિષ विष, मन्द- મંદ मन्द, वीर्यत्वम् વીર્યવાળું वीर्यवाला, प्रयाति થાય છે हो जाता है ॥ ७-८ ॥

7-8. Having its origin in water, in the rainy season, it melts like gur and spreads, and it is Agastya that can destroy its evil. Hence when the clouds disappear at the end of the rainy season, poison becomes mild in effect.

जङ्गमविषस्य भेदाः—

**सर्पाः कीटोन्दुरा लूता वृश्चिका गृहगोधिकाः ।**
**जलौकामत्स्यमण्डूकाः कणभाः सकृकण्टकाः ॥९॥**
**श्वसिंहव्याघ्रगोमायुतरक्षुनकुलादयः ।**
**दंष्ट्रिणो ये विषं तेषां दंष्ट्रोत्थं जङ्गमं मतम् ॥१०॥**

सर्पाः સર્પ સાંપ, कीट- કીટ कीट, उन्दुराः ઉંદર चूहा, लूताः લૂતા मकड़ी, वृश्चिकाः વીંછી बिच्छू, गृहगोधिकाः ગરોળી छिपकली, जलौका- જળો जौंक, मत्स्य- માછલાં मछली, मण्डूकाः દેડકાં मेंडक, सकृकण्टकाः કૃકંટક कृकंटक, कणभाः કણભ कणभ, श्व- કૂતરા कुत्ता, सिंह- સિંહ सिंह, व्याघ्र- વાઘ वाघ, गोमायु- ગોમાયુ लोमड़ी, तरक्षु- ઝરખ भालु, नकुलादयः નોળિયા વગેરે नेवला आदि, ये જે जो, दंष्ट्रिणः દાઢવાળાં પ્રાણીઓ છે दाढवाले प्राणी हैं, तेषाम् તેઓની उनकी, दंष्ट्रोत्थम् દાઢમાંથી નીકળેલ दाढसे उत्पन्न हुआ, विषम् વિષને विष, जङ्गमम् જંગમ जंगम, मतम् માનવામાં આવે છે माना जाता है ॥ ९-१० ॥

9-10. Serpents, insects, rats, spiders, scorpion, house lizards, leeches, fishes, frogs, hornets krikantaka, dogs, lions, tigers, hyena, mongoose and similar other animals are the fanged animals from whose fangs comes out the poison known as animal poison (mobile poison).

स्थावरविषस्य भेदाः—

**मुस्तकं पौष्करं क्रौञ्चं वत्सनाभं बलाहकम् ।**
**कर्कटं कालकूटं च करवीरकसंज्ञकम् ॥११॥**
**पालकेन्द्रायुधं तैलं मेघकं कुशपुष्पकम् ।**
**रोहिषं पुण्डरीकं च लाङ्गलक्यञ्जनाभकम् ॥१२॥**
**सङ्कोचं मर्कटं शृङ्गीविषं हालाहलं तथा ।**
**एवमादीनि चान्यानि मूलजानि स्थिराणि च॥१३॥**

मुस्तकम् મુસ્તક मुस्तक, पौष्करम् પોખરમૂળ पोहकरमूल, क्रौञ्चम् ક્રૌંચ क्रौंच, वत्सनाभम् વછનાગ वचनाग बलाहकम् બલાહક बलाहक, कर्कटम् કર્કટ कर्कट, कालकूटम् કાલકૂટ कालकूट, करवीरक-संज्ञकम् च કરેણ નામનું कनेर नामक, पालक- પાલક पालक, इन्द्रायुधम् ઇન્દ્રાયુધ इन्द्रायुध. तैलम् તેલ तैल, मेघकम् મેઘક मेघक, कुशपुष्पकम् કુશપુષ્પક कुशपुष्पक, रोहिषम् રોહિષ रोहिष, पुण्डरीकम् પુંડરીક पुंडरीक, लाङ्गलकी લાંગલકી कलिहारी, अञ्जनाभकम् च અંજનાભક अंजनाभक, सङ्कोचम् સંકોચ संकोच, मर्कटम् મર્કટ मर्कट, शृङ्गीविषम् શૃંગીવિષ शृंगीविष, तथा તથા तथा, हालाहलम् હાલાહલ हालाहल, एवम् आदीनि ઇત્યાદિ इत्यादि, अन्यानि च અને બીજાં और अन्य, मूलजानि મૂલજ વિષો मूलजन्य विष, स्थिराणि च સ્થાવર છે स्थावर हैं ॥ ११-१३ ॥

८. हिनस्ति च—निहन्ति च (ग.)
९. गृहगोधिकाः—गृहगोडिकाः (फ.)
,, कणभाः सकृकण्टकाः—शलभाः सर्पकण्टकाः (द.)
११. करवीरकसंज्ञकम्—करवीरकसक्तुकम् (क. थ. ब.)
१२. पालकेन्द्रायुधम्—गालवेन्द्रायुधम् (ड फ.)
,, मेघकं—मेचकं (ग.)

11-13. Mustaka, pushkara, krauncha, aconite, balahaka, karkata kalakuta and that which is known as oleander. Palaka, indrayudha, taila, meghaka and kusa-pushpaka, rohisha, punda rika, and glory lily and anjanabhaka, sankocha, markata, shringi poison halahala etc., and such other are poisons derived from roots of plants (vegetable poison).

गरविषस्य लक्षणानि—

**गरसंयोगजं चान्यद्गरसंज्ञं गदप्रदम् ।**
**कालान्तरविपाकित्वान्न तदाशु हरत्यसून् ॥१४॥**

**गरसंयोगजम्** ગરસંયોગજન્ય गरसंयोगजन्य, **गदप्रदम् च** અને રોગપ્રદ और रोग करनेवाला, **अन्यत्** બીજું दूसरा, **गरसंज्ञम्** ગર નામનું વિષ છે गर नामक विष है, **तत्** તે वह, **कालान्तर-** કાળે કાળે कालांतरमें, **विपाकित्वात्** વિપાક પામનાર હોવાથી विपाकशील होनेसे, **असून्** પ્રાણોને प्राणोंका, **आशु** જલદી जल्दी, **न हरति** હરતું નથી हरण नहीं करता ॥ १४ ॥

14. There is another variety of poison called artificial poison which is produced by combination of substances and which gives rise to disease-condition. Being slow in its development and action, it does not kill swiftly.

जङ्गमविषलिङ्गानि—

**निद्रां तन्द्रां क्लमं दाहं सपाकं लोमहर्षणम् ।**
**शोफं चैवातिसारं च जनयेज्जङ्गमं विषम् ॥१५॥**

**जङ्गमम्** જંગમ जङ्गम, **विषम्** વિષ विष, **निद्राम्** નિદ્રા निद्रा, **तन्द्राम्** તંદ્રા तन्द्रा, **क्लमम्** થાક थकावट, **सपाकम्** પાક पाकयुक्त, **दाहम्** દાહ दाह, **लोमहर्षणम्** રોમહર્ષ रोमहर्ष, **शोफम् च एव** સોજો शोफ, **अतिसारम् च** અને અતિસાર और अतिसार, **जनयेत्** પેદા કરે છે उत्पन्न करता है ॥ १५ ॥

15. Animal poison causes somnolence, torpor, fatigue, burning, inflammation, horripilation, edema and diarrhea.

स्थावरविषलिङ्गानि—

**स्थावरं तु ज्वरं हिक्कां दन्तहर्षं गलग्रहम् ।**
**फेनवम्यरुचिश्वासमूर्च्छाश्च जनयेद्विषम् ॥१६॥**

**स्थावरम् विषम् तु** સ્થાવર વિષ स्थावर विष, **ज्वरम्** જ્વર ज्वर, **हिक्काम्** હેડકી हिचकी, **दन्तहर्षम्** દન્તહર્ષ दन्तहर्ष, **गलग्रहम्** ગલગ્રહ गलग्रह, **फेनवमि-** ફીણ આવવાં झाग आना, **अरुचि-** અરુચિ अरुचि, **श्वास-** શ્વાસ श्वास, **मूर्च्छाः च** અને મૂર્ચ્છા और मूर्च्छाको, **जनयेत्** પેદા કરે છે उत्पन्न करता है ॥ १६ ॥

16. While vegetable poison causes fever, hiccup, setting the teeth on edge, spasm of the throat, frothy salivation, vomiting, anorexia, dyspnea and fainting.

जङ्गमस्थावरोभयविषप्रभावः—

**जङ्गमं स्यादधोभागमूर्ध्वभागं तु मूलजम् ।**
**तस्माद्दंष्ट्राविषं मौलं हन्ति मौलं च दंष्ट्रजम् ॥१७॥**

**जङ्गमम्** જંગમ વિષ जंगम विष, **अधोभागम्** નીચેની બાજુએ ગતિ કરનારૂં अधोभागमें गति करनेवाला, **मूलजम् तु** અને મૂળજ વિષ और मूलज

१५. गरसंयोगजम्--परसंयोगजं (क.)
,, --परं संयोगजं (ब.)
१५. क्लमं दाहम्--मेहं दाहं (ध.)
,, दाहं सपाकं--दाहमपाकं (ध.)
,, जनयेत्--कुरुते (ध. ब.)
१६. वमि--छर्दि (ब.)
१७ जङ्गमं स्यादधोभागमूर्ध्वभागं तु मूलजम्--जङ्गमं स्यादूर्ध्वभागमधोभागं तु मूलजम् (ब. त.)
,, तस्माद्दंष्ट्राविषं--तस्माद्दंष्ट्रिविषं (ब.)
,, दंष्ट्रजम्--दंष्ट्रिजम् (ब.)

विष, ऊर्ध्वभागम् ઉપરની બાજુએ ગતિ કરનારું ऊर्ध्वभागमें गति करनेवाला, स्यात् છે है, तस्मात् તેથી इस लिए, दंष्ट्राविषम् દંષ્ટ્રાવિષ दंष्ट्राविष, मौलम् મૂલજ વિષને मूलज विषको, मौलम् च અને મૂલજ વિષ और मूलज विष, दंष्ट्रजम् દંષ્ટ્રાવિષને दंष्ट्राविषको, हन्ति હણે છે नष्ट करता है ॥ १७ ॥

17. Animal poison affects the lower part of the alimentary tract more, while the vegetable poison affects more the upper part. Therefore, animal poison neutralises the effects of vegetable poison and vegetable poison neutralises the animal poison.

मनुष्यशरीरे विषस्य सप्तवेगानां पृथग्लक्षणानि—

**तृण्मोहदन्तहर्षप्रसेकवमथुक्लमा भवन्त्याद्ये ।**
**वेगे रसप्रदोषादसृक्प्रदोषाद् द्वितीये तु ॥१८॥**
**वैवर्ण्यभ्रमवेपथुमूर्च्छाजृम्भाङ्गचिमिचिमातमकाः ।**
**दुष्टपिशितात्तृतीये मण्डलकण्डूश्वयथुकोठाः ॥१९॥**
**वातादिजाश्चतुर्थे दाहच्छर्द्यङ्गशूलमूर्च्छाद्याः ।**
**नीलादीनां तमसश्च दर्शनं पञ्चमे वेगे ॥२०॥**
**षष्ठे हिक्का भङ्गः स्कन्धस्य तु सप्तमेऽष्टमे मरणम् ।**
**नृणां,**

आद्ये પહેલા प्रथम, वेगे વેગમાં वेगमें, रसप्रदोषात् રસ દૂષિત થવાથી रस दूषित होनेसे, तृण्मोह- તરસ, મૂર્ચ્છા प्यास, मूर्च्छा, दन्तहर्ष- દન્તહર્ષ दन्तहर्ष, प्रसेक- પ્રસેક प्रसेक, वमथु- વમન वमन, क्लमाः અને ક્લમ और थकावट, भवन्ति થાય છે होती है, द्वितीये तु બીજા વેગમાં दूसरे वेगमें, असृक्- રક્ત रक्तके, प्रदोषात् દૂષિત થવાથી दूषित होनेसे, वैवर्ण्य- વિવર્ણતા विवर्णता, भ्रम- ભ્રમ भ्रम, वेपथु- કંપ कम्प, मूर्च्छा- મૂર્ચ્છા मूर्च्छा, जृम्भा- બગાસાં जम्भाई, अङ्गचिमिचिमा- દેહમાં ચમચમાટ अङ्गोंमें चिमचिमाहट, तमकाः અને તમક થાય છે और तमक होते हैं, तृतीये ત્રીજા વેગમાં तीसरे वेगमें, दुष्टपिशितात् માંસ દૂષિત થવાથી मांसके दूषित होनेसे, मण्डल- મંડલ मंडल, कण्डू- ખરજ खुजली, श्वयथु- સોજો शोफ, कोठाः અને કોઠ થાય છે और कोठ होते हैं, चतुर्थे ચોથા વેગમાં चतुर्थ वेगमें, वातादिजाः વાતાદિજન્ય वातादिजन्य, दाह- દાહ दाह, छर्दि- ઉલટી वमन, अङ्गशूल- શરીરમાં શૂળ शरीरमें शूल, मूर्च्छाद्याः અને મૂર્ચ્છા વગેરે થાય છે और मूर्च्छा आदि होते हैं, पञ्चमे પાંચમા વેગમાં पांचवें, वेगे વેગમાં वेगमें, नीलादीनाम् વાદળી વગેરે રૂપ नीले आदि रूप, तमसः च અને અંધારાં और अंधेरा, दर्शनम् દેખાય છે दिखाई देते हैं, षष्ठे છઠ્ઠા વેગમાં छट्टे वेगमें, हिक्का હેડકી થાય છે हिचकी होती है, सप्तमे तु સાતમા વેગમાં सातवें वेगमें, स्कन्धस्य કાંધ कन्धेका, भ ः નમી જાય છે भंग होता है, अष्टमे અને આઠમા વેગમાં और आठवें वेगमें, नृणाम् મનુષ્યનું मनुष्यकी, मरणम् મરણ થાય છે मृत्यु हो जाती है ॥ १८-२०½ ॥

18-20½. In the first stage of poisoning, as a result of vitiation of the body nutrient fluid, there occur, at first, thirst, stupor, setting the teeth on edge, ptyalism, vomiting and prostration. In the second stage when the blood gets vitiated, there occur discoloration, giddiness, tremors, fainting, sternutation, tingling pain in the body and asthma. In the third stage of poisoning when the flesh gets vitiated there will be eruption, pruritus, edema, and wheals. In the fourth stage when there is vitiation of vata and other humors there will be burning, vomiting, body-ache and fainting etc. In the fifth stage, there will be darkness of vision or vision of various colors. In the sixth

१८. तृण्मोह- हन्मोह (फ.)
१९. चिमिचिमातमकाः—चिमिचिमातकाः (छ. ग. फ.)
,, तमकाः—जृंभाः (ब.)
२०½. स्कन्धस्य तु—स्कन्धे स्यात्तु (ब.)

stage, there will be hiccup; and in the seventh stage there will be paralysis of the muscles supporting the shoulder girdle. In the eighth, there occurs death. These are the eight stages of toxicosis.

पशुपक्षिशरीरे विषवेगस्य लक्षणानि—

**चतुष्पदां स्याच्चतुर्विधः, पक्षिणां त्रिविधः ॥२१॥**
**सीदत्याद्ये भ्रमति च, चतुष्पदो वेपते, ततः शून्यः।**
**मन्दाहारो म्रियते श्वासेन हि चतुर्थवेगे तु ॥२२॥**
**ध्यायति विहगः प्रथमे वेगे, प्रभ्राम्यति द्वितीये तु।**
**स्रस्ताङ्गश्च तृतीये विषवेगे याति पञ्चत्वम् ॥२३॥**

चतुष्पदाम् પશુઓમાં पशुओंमें, चतुर्विधः વિષનો વેગ ચાર પ્રકારનો થાય છે विषका वेग चार प्रकारका होता है, पक्षिणाम् પક્ષીઓમાં पक्षियोंमें, त्रिविधः વિષનો વેગ ત્રણ પ્રકારનો विषका वेग तीन प्रकारका, स्यात् થાય છે होता है, चतुष्पदः પશુ पशु, आद्ये પહેલા વેગમાં प्रथम वेगमें, सीदति શિથિલ થાય છે शिथिल हो जाता है, भ्रमति અને ચક્કર ખાય છે और भ्रमसे पीड़ित होता है, वेपते च બીજા વેગમાં કમ્પે છે दूसरे वेगमें कांपता है, ततः शून्यः ત્રીજા વેગમાં શૂન્ય થાય છે तीसरे वेगमें शून्य होता है, चतुर्थवेगे तु અને ચોથા વેગમાં और चतुर्थ वेगमें, मन्दाहारः થોડા આહારવાળું થઈ अल्प आहारवाला होकर, श्वासेन શ્વાસથી श्वाससे, म्रियते हि મરણ પામે છે मृत हो जाता है, विहगः પક્ષી पक्षी, प्रथमे પ્રથમ प्रथम, वेगे વેગમાં वेगमें, ध्यायति ચિન્તાગ્રસ્ત જેવું થાય છે एक टक देखता है, द्वितीये तु બીજા વેગમાં दूसरे वेगमें, प्रभ्राम्यति ચક્કર ફર્યા કરે છે चक्कर खाता है, तृतीये विषवेगे અને વિષના ત્રીજા વેગમાં और विषके तीसरे वेगमें, स्रस्ताङ्गः च શિથિલ અંગવાળું થઈ शिथिल शरीरवाला होकर, पञ्चत्वम् याति મરણ પામે છે मृत हो जाता है ॥ २१-२३ ॥

21-23. There are four stages in the case of quadrupeds, and three stages in that of birds. In the animal, in the first stage, there will be asthenia and whirling; in the second stage the animal quivers, and in the third, passes into stupor and takes no food. In the fourth stage respiration becomes hard and it dies. The bird in the first stage of poisoning feels depression and in the second stage whirling, in the third stage its limbs get paralysed and death ensues.

विषस्य दश गुणाः—

**लघु रूक्षमाशु विशदं व्यवायि तीक्ष्णं विकासि सूक्ष्मं च।**
**उष्णमनिर्देश्यरसं दशगुणमुक्तं विषं तज्ज्ञैः ॥२४॥**

तज्ज्ञैः વિષવૈદ્યોએ विषको जाननेवालोंने, विषम् વિષને विषको, लघु લઘુ लघु, रूक्षम् રૂક્ષ रूक्ष, आशु આશુકારી आशुकारी, विशदम् વિશદ विशद, व्यवायि વ્યવાયી व्यवायी, तीक्ष्णम् તીક્ષ્ણ तीक्ष्ण, विकासि વિકાસી विकासी, सूक्ष्मम् સૂક્ષ્મ सूक्ष्म, उष्णम् ઉષ્ણ उष्ण, अनिर्देश्यरसम् અને અનિર્દેશ્ય રસવાળું और अनिर्देश्य रसवाला, दशगुणम् च એમ દશ ગુણવાળું इन दस गुणोंवाला, उक्तम् કહ્યું છે कहा है ॥२४॥

२२. सीदत्याद्ये भ्रमति च चतुष्पदो वेपते—आद्ये भ्रमति चतुष्पदोऽवसीदति (घ)
,, ,, —अथ भ्रमति चतुष्पाद् सीदत्याद्ये भ्रमति च वेपते (थ.)
,, ततः शून्य—ततः शूनः (क. थ. फ. ब.)
,, मन्दाहारो म्रियते श्वासेन हि चतुर्थवेगे तु—मन्दाहारश्च ततो म्रियते श्वासेन हि चतुर्थे (फ.)
,, हि चतुर्थवेगे—हि चतुर्थे वेगे (ब)
,, ध्यायति विहगः प्रथमे वेगे प्रभ्राम्यति द्वितीये तु—आद्ये वेगे पक्षी प्रभ्राम्यति द्वितीयवेगे तु (फ.)

24. Lightness, dryness, quickness, clearness, diffusiveness, acuteness, expansiveness, subtleness, heat and indistinct taste are the ten qualities of poison described by toxicologists.

**रौक्ष्याद्वातमशैत्यात्पित्तं सौक्ष्म्यादसृक् प्रकोपयति।**
**कफमव्यक्तरसत्वादन्नरसांश्चानुवर्तते शीघ्रम ॥२५॥**
**शीघ्रं व्यवायिभावादाशु व्याप्नोति केवलं देहम् ।**
**तीक्ष्णत्वान्मर्मघ्नं प्राणघ्नं तद्विकासित्वात् ॥२६॥**
**दुरुपक्रमं लघुत्वाद्वैशद्यात् स्यादसक्तगतिदोषम् ।**
**दोषस्थानप्रकृतीः प्राप्यान्यतमं ह्युदीरयति ॥२७॥**

वत् ते विष वह विष, **रौक्ष्यात्** रुक्षताथी रूक्षतासे, **वातम्** वायुने वायुको, **अशैत्यात्** उष्णताथी उष्णतासे, **पित्तम्** पित्तने पित्तको, **सौक्ष्म्यात्** सूक्ष्मताथी सूक्ष्मतासे, **असृक्** रक्तने रक्तको, **अव्यक्त-** तथा अव्यक्त तथा अव्यक्त, **रसत्वात्** रसवाळापणाथी रसवाला होनेसे, **कफम् च** कफने कफको, **प्रकोपयति** प्रकुपित करे छे प्रकुपित करता है, **शीघ्रम्** शीघ्रपणाथी शीघ्र होनेसे, **अन्नरसान् च** अन्नरसोनुं अन्नरसोंका, **शीघ्रम्** शीघ्र शीघ्र, **अनुवर्तते** अनुवर्तन करे छे अनुवर्तन करता है, **व्यवायिभावात्** व्यवायीपणाथी व्यवायी होनेसे, **केवलम्** आखा संपूर्ण, **देहम्** देहमां देहमें, **आशु** शीघ्र शीघ्र, **व्याप्नोति** व्याप्त थाय छे व्याप्त होता है, **तीक्ष्णत्वात्** तीक्ष्णताथी तीक्ष्ण होनेसे, **मर्मघ्नम्** मर्मघाती छे मर्मनाशक है, **विकासित्वात्** विकासीपणाथी विकासी होनेसे, **प्राणघ्नम् च** प्राणघातक छे प्राणनाशक है, **लघुत्वात्** लघुताथी लघु होनेसे, **दुरुपक्रमम्** मुश्केलीए चिकित्सा कराय एवुं छे दुश्चिकित्स्य है, **वैशद्यात्** विशदताथी विशद होनेसे, **असक्तगतिदोषम् स्यात्** गति अने दोषनी अटकायत विनानुं छे गति और दोषोंकी रुकावटसे रहित है, **दोषस्थान-** अने दोषनां स्थान और दोषके स्थान, **प्रकृतीः** तथा रोगीनी प्रकृतिने तथा रोगीकी प्रकृतिको, **प्राप्य** प्राप्त करीने प्राप्त करके, **अन्यतमम्** त्रण दोषोमांना एक दोषनुं तीन दोषोंमेंसे किसी एक दोषको, **उदीरयति हि** उदीरण करे छे प्रकुपित करता है ॥२५-२७॥

25-27. By its dryness it provokes the vata, by its heat it provokes the pitta, and by its subtleness it vitiates the blood. By its indistinctness of taste it provokes the kapha and spreads quickly in the body-nutrient fluid. By its diffusive quality it spreads quickly in the entire body. By its acuteness it is injurious to the vital organs and by its expansiveness it destroys life. Owing to its lightness, it is difficult of treatment, and on account of its limpidness its flow cannot be stopped. Having reached the seat of the humor and according to the habitus of the patient, it provokes other complications.

दोषस्थानप्रकृतीः प्राप्य विषं यत् करोति—

**स्याद्वातिकस्य वातस्थाने कफपित्तलिङ्गमीषत्तु ।**
**तृण्मोहारतिमूर्च्छागलग्रहच्छर्दिफेनादि ॥२८॥**

**वातिकस्य** विष वातप्रकृतिवाळा पुरुषना विष वातप्रकृतिवाले पुरुषके, **वातस्थाने** वाताशयमां रह्युं होय तो वाताशयमें रहा हो तो, **कफपित्तलिङ्गम् तु** कफ अने पित्तनां लक्षणो कफ और पित्तके लक्षण, **ईषत् स्यात्** ओछां होय छे अने वातनां नीचे कहेलां लक्षणो विशेष होय छे थोडे होते हैं और वातके निम्नोक्त लक्षण विशेष होते हैं, **तृट्** जेवा केः- तरस जैसेकिः—प्यास, **मोह-** मोह मोह, **अरति-** बेचेनी अरति, **मूर्च्छा-** मूर्छा मूर्च्छा, **गलग्रह-** गलग्रह गलग्रह, **छर्दि-** उलटी वमन, **फेनादि** फीण वगेरे फेन आदि ॥ २८ ॥

28. If the patient is of vata habitus and the poison affects the seat of vata, there will be marked symptoms of vata and only slight symptoms of kapha and pitta. They are—thirst, stupor, apathy, fainting, spasm of the throat, vomiting and frothy salivation.

**पित्ताशयस्थितं पैत्तिकस्य कफवातयोर्विषं तद्वत् ।**
**तृट्कासज्वरवमथुक्लमदाहतमोतिसारादि ॥२९॥**

विषम् विष विष, पैत्तिकस्य पित्तप्रकृतिवाळा पुरुषना पित्तप्रकृतिवाले पुरुषके, पित्ताशय- पित्ताशयमां पित्ताशयमें, स्थितम् चेत् रह्युं होय तो रहा हो तो, कफवातयोः कफ अने वातनां लक्षणो कफ और वातके लक्षण, तद्वत् ओछां होय छे अने पित्तनां नीचे कहेलां लक्षणो विशेष होय छे थोडे होते हैं और पित्तके निम्नोक्त लक्षण विशेष होते हैं, तृट् जेवांके:– तरस जैसेकिः– प्यास, कास- उधरस खांसी, ज्वर- ज्वर ज्वर, वमथु- वमथु वमन, क्लम- क्लम थकावट, दाह- दाह दाह, तमः- अंधारां आववां तम, अतिसारादि अतिसार वगेरे अतिसार आदि ॥ २९ ॥

29. If a patient is of pitta habitus and the poison affects the seat of pitta, there will be marked symptoms of pitta and only slight symptoms of kapha and vata. They are—thirst, cough, fever, vomiting, prostration, burning, darkness of vision and diarrhea etc

**कफदेशगं कफस्य च दर्शयेद्वातपित्तयोरीषत् ।**
**लिङ्गं श्वासगलग्रहकण्डूलालावमथ्वादि ॥३०॥**

कफस्य च विष कफप्रकृतिवाळा पुरुषना कफ प्रकृतिवाले पुरुषके, कफदेशगम् चेत् कफाशयमां रह्युं होय तो ते कफाशयमें रहा हो तो वह, वातपित्तयोः वात अने पित्तनां वात और पित्तके, लिङ्गम् च लक्षणो लक्षण, ईषत् दर्शयेत् ओछां बतावे छे अने कफनां नीचे कहेलां लक्षणो विशेष बतावे छे थोडे बताता है और कफके निम्नोक्त लक्षण विशेष बताता है, श्वास- जेवांके:– श्वास जैसेकिः– श्वास, गलग्रह- गलग्रह गलग्रह, कण्डू- खरज कंडू, लाला- लाळ लाला, वमथु-आदि वमन वगेरे वमन आदि ॥ ३० ॥

30. If a patient is of kapha habitus and the poison affects the seat of kapha, there will be marked symptoms of kapha and only slight symptoms of vata and pitta. They are—dyspnea, spasm of the throat, pruritus, salivation and vomiting etc.

दूषीविषस्य लक्षणम्—

**दूषीविषं तु शोणितदुष्ट्यारुःकिटिभकोठलिङ्गं च ।**
**विषमेकैकं दोषं संदूष्य हरत्यसूनेवम् ॥३१॥**

दूषीविषम् दूषीविष दूषीविष, तु वळी तो, शोणित- रक्तने रक्तको, दुष्ट्या दूषित करीने दूषित करके, अरुः- फोडला-फोडली फोड़े-फुन्सियां, किटिम- किटिभ किटिभ, कोठ- अने कोठ और कोठ, लिङ्गम् च ए लक्षणोवाळुं होय छे इन लक्षणवाला होता है. एवम् आ रीते इस प्रकार, विषम् विष विष, एकैकम् एक एक एक, दोषम् दोषने दोषको, संदूष्य अधिक दूषित करीने अधिक दूषित करके, असून् प्राण प्राणोंका, हरति हरे छे हरण करता है ॥ ३१ ॥

31. The artificial poison vitiating the blood, causes ulcers and killoids, and the poison, vitiating gradually one after another of the body elements, kills the man ultimately.

विषं यथा मारयति—

**क्षरति विषतेजसाऽसृक्**
**तत् खानि निरुध्य मारयति जन्तुम् ।**
**पीतं मृतस्य हृदि तिष्ठति**
**दष्टविद्धयोर्दंशदेशे स्यात् ॥३२॥**

२९. कफवातयोः—कफपित्तयोः (ह.)
,, तृट्कासज्वरवमथुक्लम—तृट्पाकज्वरशोषक्लम (क. ब)
३० कफदेशगं कफस्य च दर्शयेद्वातपित्तयोरीषत्—कफदेशगतं कफाधिकस्य वातपित्तयोश्च दर्शयति (ब.)
३१. किटिमकोठलिङ्गम्—किटिभकोटलिङ्गम् (क.)
३२. तत् खानि निरुध्य—खानि निरुध्याशु (ध क.)

विष- વિષના विषके, तेजसा તેજથી तेजसे, असृक् લોહીનું रक्तका, क्षरति ક્ષરણ થાય છે क्षरण होता है, तत् તે वह, खानि સ્રોતોને स्रोतोंको, निरुध्य રોધ કરીને रोककर, जन्तुम् પ્રાણીને प्राणीको, मारयति મારી નાખે છે मार डालता है, पीतम् પીધેલું વિષ पिया हुआ विष, मृतस्य મરેલા મનુષ્યના मृत मनुष्यके, हृदि હૃદયમાં हृदयमें, तिष्ठति રહે છે ठहरता है, दष्ट- અને દષ્ટ और दष्ट, विद्धयोः તથા વિદ્ધ મનુષ્યમાં વિષ तथा विद्ध मनुष्यमें विष, दंशदेशे દંશના પ્રદેશમાં दंश किये हुए प्रदेशमें, स्यात् રહે છે रहता है ॥ ३२ ॥

32. The blood undergoes vitiation due to fiery quality of the poison, and occludes the circulatory channels and kills the man. The poison which has been taken orally lies in the stomach of the deceased, while the poison in one that is stung or bitten lies in the region stung or bitten.

विषमृतस्य लिङ्गानि—

नीलौष्ठदन्तशैथिल्यकेशपतनाङ्गभङ्गविक्षेपाः ।
शिशिरैर्न लोमहर्षो नाभिहते दण्डराजी स्यात् ॥३३॥
क्षतजं क्षताच्च नायात्येतानि भवन्ति मरणलिङ्गानि ।
एभ्योऽन्यथा चिकित्स्यास्तेषां चोपक्रमाञ्छृणु मे ३४

नीलौष्ठ- નીલ હોઠ नीले होठ, दन्तशैथिल्य- દાંતની શિથિલતા दांतोंका हिलना, केशपतन- વાળ ઊતરવા बालोंका झड़ना, अङ्गभङ्ग- અંગ ભાંગવા अङ्गभङ्ग, विक्षेपाः અંગવિક્ષેપ विक्षेप, शिशिरैः ઠંડી ચીજોના સ્પર્શ વગેરેથી शीतल द्रव्योंके स्पर्श आदिसे, लोमहर्षः न રૂંવાડાં ઊભાં ન થવાં रोमांच न होना, अभिहते લાકડી મારવાથી પણ दंडसे आघात करने पर भी, दण्डराजी- લાકડીની સોળ दण्डके आघात चिह्नका, न स्यात् ન ઊઠવી न बनना, क्षतजम् અને લોહીનું और रक्तका, क्षतात् च ક્ષતમાંથી क्षतसे, न आयाति ન આવવું न बहना, एतानि એ ये, मरणलिङ्गानि મરણનાં ચિહ્નો मृत्युके लक्षण, भवन्ति થાય છે होते हैं, एभ्यः આ લક્ષણવાળાઓથી इन लक्षणवालोंसे, अन्यथा વિપરીત લક્ષણવાળા મનુષ્યો विपरीत लक्षणवाले मनुष्य, चिकित्स्याः ચિકિત્સા કરવા યોગ્ય છે चिकित्सा करने योग्य हैं, तेषाम् તેઓના उनके, उपक्रमान् च ઉપક્રમો उपक्रम, मे મારી પાસેથી मुझसे, शृणु સાંભળો सुनो ॥ ३३-३४ ॥

33-34. Cyanosis of the lips, loosening of teeth, falling of the hair, paralysis of the body, rigor mortis, absence of horripilation at the touch of cold, non-formation of contusion-marks on the body in reaction to blows, absence of the flow of blood on inflicting a wound—these are the signs and symptoms of death. Those in whom the above symptoms are not seen, are to be treated. Now listen to their therapeusis, as I describe it.

विषस्य चतुर्विंशत्युपक्रमाः—

मन्त्रारिष्टोत्कर्तननिष्पीडनचूषणाग्निपरिषेकाः ।
अवगाहरक्तमोक्षणवमनविरेकोपधानानि ॥३५॥
हृदयावरणाञ्जननस्यधूमलेहौषधप्रशमनानि ।
प्रतिसारणं प्रतिविषं संज्ञासंस्थापनं लेपः ॥३६॥
मृतसञ्जीवनमेव च विंशतिरेते चतुर्भिरधिका ।
स्युरुपक्रमा यथा ये यत्र योज्याः शृणु तथा तान् ३७

मन्त्र- મન્ત્ર मन्त्र, अरिष्टा- અરિષ્ટા अरिष्टा, उत्कर्तन ઉત્કર્તન उत्कर्तन, निष्पीडन નિષ્પીડન निष्पीड़न, चूषण- ચૂષણ चूषण, अग्नि- અગ્નિકર્મ अग्निकर्म, परिषेकाः

३३. दण्डराजी स्यात्–दण्डराजी च (ख. घ.)
३४. एतानि भवन्ति–उक्तानि एतानि (ङ.)
,, शृणु मे–शृणुत (घ.)

३६. प्रशमनानि–प्रथमनानि (फ.)
३७. अधिका–अभ्यधिका (छ.)
,, स्युरुपक्रमा यथा ये–दुरुपक्रमा यथा यत्र (थ.)

परिषेक परिषेक परिषेक, **अवगाह**- અવગાહન अवगाहन, **रक्तमोक्षण**- રક્તમોક્ષણ रक्तमोक्षण, **वमन**- વમન वमन, **विरेक**- વિરેચન विरेचन, **उपधानानि** ઉપધાન उपधान, **हृदयावरण**- હૃદયાવરણ हृदयावरण, **अञ्जन**- અંજન अंजन, **नस्य**- નસ્ય नस्य, **धूम**- ધૂમ धुम, **लेह**- લેહ लेह, **औषध**- ઔષધ औषध, **प्रशमनानि** પ્રશમન प्रशमन, **प्रतिसारणम्** પ્રતિસારણ प्रतिसारण, **प्रतिविषम्** પ્રતિવિષ प्रतिविष, **संज्ञासंस्थापनम्** સંજ્ઞાસંસ્થાપન संज्ञा-संस्थापन, **लेपः** લેપ लेप, **मृतसञ्जीवनम् च एव** અને મૃતસંજીવન और मृतसञ्जीवन, **एते** એ ये, **चतुर्भिः अधिका विंशतिः** ચોવીસ चौवीस, **उपक्रमाः** ઉપક્રમો उपक्रम, **स्युः** છે हैं, **ये** જેઓના जिनके, **यत्र** જ્યાં जहां, **यथा** જે રીતના जिस तरहके, **योज्याः** પ્રયોગ થવા જોઈએ प्रयोग होने चाहिएं, **तथा तान्** તે ઉપક્રમોના ત્યાં તે રીતના તે પ્રયોગો उन उपक्रमोंके वहां उस तरहके उन प्रयोगोंको, **शृणु** સાંભળો सुनो ॥३५-३७॥

35-37. Incantations, amulets, excision, compression, suction, cauterization by heat, affusion, bath, depletion, emesis, purgation, scalp-incision (upadhana), protection of the heart, eye-medication, nasal medication, inhalation, linctuses, sedative medications, alkaline applications, counter-poison, resuscitation, external application and re-animation—these four and twenty are the therapeutic measures. Now listen to the narration of how and when each of them is to be administered.

विषे वेणिकाबन्ध-निष्पीडनोत्कर्तनानि, विषे चूषणम्—

**दंशात्तु विषं दष्टस्याविसृतं वेणिकां भिषग्बद्ध्वा ।**
**निष्पीडयेद्भृशं दंशमुद्धरेन्मर्मवर्जं वा ॥३८॥**
**तं दंशं वा चूषेन्मुखेन यवचूर्णपांशुपूर्णेन ।**

**भिषक्** વૈદ્ય वैद्य, **दष्टस्य** દંશ પામેલા પુરુષના दष्ट हुए पुरुषके, **दंशात्** દંશમાંથી दंशमेंसे, **अविसृतम् विषम् तु** વિષ પ્રસર્યું ન હોય તો शरीरमें न फैले विषको, **वेणिकाम्** વેણિકા वेणिका, **बद्ध्वा** બાંધીને बांधकर, **भृशम्** બહુ जोरसे, **निष्पीडयेत्** પીડન કરવું दबावे, **मर्मवर्जम्** અથવા મર્મને છોડી દઈ या मर्मको छोड़कर, **दंशम्** દંશને दंशको, **उद्धरेत्** કાપી કાઢવો काटकर निकाले, **तम्** અથવા તે अथवा उस, **दंशम्** દંશને दंशको, **यवचूर्ण**- જવના લોટથી जौके आटे, **पांशुपूर्णेन** કે ધૂળથી ભરેલા या धूलसे भरे हुए, **मुखेन** મુખ વડે मुखसे, **चूषेत् वा** ચૂસવો चूसे ॥ ३८½ ॥

38-38½. In the case of a poisonous bite, the physician should apply a ligature above the region of the bite and squeeze the part well, before the poison has spread in the body or should try to cut out that part except in the region of the vital organs; or, the physician filling his mouth with barley flour or earth must suck up the poison from the bitten area with his mouth.

विषे रक्तस्रावणम्, प्रदेह-सेकाः —

**प्रच्छनशृङ्गजलौकाव्यधनैः स्राव्यं ततो रक्तम् ॥३९॥**
**रक्ते विषप्रदुष्टे दुष्येत् प्रकृतिस्ततस्त्यजेत् प्राणान् ।**
**तस्मात् प्रघर्षणैरसृगवसेचनं प्रवर्त्यं स्यात् ॥४०॥**
**त्रिकटुगृहधूमरजनीपञ्चलवणरोचनाः सवार्ताकाः ।**
**घर्षणमतिप्रवृत्ते वटादिभिः शीतलैर्लेपः ॥४१॥**
**रक्तं हि विषाधानं वायुरिवाग्नेः प्रदेहसेकैस्तत् ।**
**शीतैः स्कन्दति तस्मिन् स्कन्ने व्यपयाति विषवेगः ॥**

३९. प्रच्छनशृङ्गजलौकाव्यधनैः—प्रच्छनवेधजलौकःशृङ्गैः (ध.ड.त.)
स्राव्यं ततो रक्तम्—स्रावयेद्वा रुधिरम् (ग.)
४१. पञ्चलवणरोचनाः—पञ्चलवणरोचकाः (ध. ध. म.)
४२. शीतैः स्कन्दति तस्मिन् स्कन्ने व्यपयाति विषवेगः—सेकैः स्कन्दति तस्मिन् क्षते व्यपयाति विषवेगः (ड.)
,, व्यपयाति—व्ययं याति (ड.)

**विषवेगान्मदमूर्च्छाविषादहृदयद्रवाः प्रवर्तन्ते ।**
**शीतैर्निवर्तयेत्तान् वीज्याश्चालोमहर्षात् स्यात् ॥४३॥**

ततः પછી पीछे, प्रच्छन- છેકા મારીને प्रच्छन, शृङ्ग- શીંગડીથી सींगी, जलौका- જળોથી जौंक, व्यधनैः કે શિરાવેધથી या शिरावेधसे, रक्तम् રક્તનું रक्तका, स्राव्यम् સ્રાવણ કરવું स्राव करना चाहिए, रक्ते રક્ત रक्त, विषप्रदुष्टे વિષથી દૂષિત થતાં विषसे दूषित होने पर, प्रकृतिः પ્રકૃતિ प्रकृति, दुष्येत् દૂષિત થાય છે दूषित होती है, ततः અને પછી મનુષ્ય और पश्चात् मनुष्य, प्राणान् પ્રાણોને प्राणोंका, त्यजेत् ત્યાગ કરે છે त्याग करता है, तस्मात् તેથી इस लिए, अवर्तमानम् न પ્રવર્તતા अप्रवृत्त, असृक् લોહીને रक्तको, प्रघर्षणैः પ્રઘર્ષણોથી प्रघर्षणोंसे, प्रवर्त्यम् स्यात् પ્રવર્તાવવું प्रवृत्त करना चाहिए, सवार्ताकाः ભોરીંગણી कटेरी, त्रिकटु- ત્રિકટુ त्रिकटु, गृहधूम- ઘરનો ધૂમાડો घरकी धुंवाडी, रजनी- હળદર हल्दी, पञ्चलवण-પાંચેય લવણ पांचों नमक, रोचनाः અને ગોરોચનનું और गोरोचनको, घर्षणम् ઘર્ષણ કરવું रगडे, अतिप्रवृत्ते લોહી બહુ વહેતાં रक्तकी अति प्रवृत्ति होने पर, वटादिभिः વડ વગેરે वटादि, शीतलैः શીતલ દ્રવ્યોથી शीतल द्रव्योंसे, लेपः લેપ કરવો प्रलेपन करे, वायुः જેમ વાયુ जैसे वायु, अग्नेः અગ્નિને ફેલાવે છે अग्निको फैलाता है, रक्तम् તેમ રક્ત वैसे रक्त विषा- ध्मानम् हि વિષને ફેલાવે છે विषको फैलाता है, तत् તે वह शीतैः શીતળ शीतल, प्रदेह- લેપ लेप, सेकैः અને પરિષેકોથી और परिषेकोंसे, स्कन्दति જામી જાય છે गाढा होता है, तस्मिन् અને તે और उसके, स्कन्ने જામી જતાં गाढा होने पर, विषवेगः व्युपशाम्यति વિષનો વેગ હઠી જાય છે विषका वेग हट जाता है, विषवेगात् વિષના વેગથી विषवेगसे, मद- મદ मद, मूर्च्छा- મૂર્ચ્છા मूर्च्छा, विषाद- વિષાદ विषाद, हृदयद्रवाः અને હૃદયના વેગનું વધવું और हृदयकी गतिका बढ़ना, प्रवर्तन्ते થાય છે उत्पन्न होते हैं, तान् તેઓને उनको, शीतैः શીતળ ઉપક્રમોથી शीतल उपचारोंसे, निवर्तयेत् મટાડવા निवृत्त करे, आलोमहर्षात् અને રૂંવાડાં ઊભાં થતાં સુધી और लोमहर्ष हो वहां तक, वीज्यः च स्यात् પંખાનો પવન નાખવો पंखेकी वायु डालनी चाहिए ॥ ३९-४३ ॥

39-43. Then he should perform depletion of blood by wet-cupping with the horn or by leeching or by venesection. Else the blood being vitiated by the poison, the entire body gets vitiated and the man dies. Therefore the blood which does not flow out must be forced out by means of friction-massage. The three spices, kitchen soot, turmeric, the pentad of salt, ox-bile and indian nightshade make a good rubbing powder for inducing bleeding. If the blood is flowing out too much, cooling application of the banyan and similar other trees should be given. The blood is the vehicle of the poison just as the wind is of fire. So it should be treated with applications and affusions. As a result of cooling measures, the blood congeales and the blood being congealed the spreading of the poison is prevented. It is owing to the spreading of the poison that there occur intoxication, fainting, asthenia and tachycardia. So this should be alleviated by means of cooling measures and the patient should be fanned till there is horripilation owing to the cold induced.

४३. शीतैर्निवर्तयेत्तान् वीज्यश्चालोमहर्षात् स्यात्—शीतैर्विवर्तयेत्तान् इनश्चानु लोमहर्षः स्यात् (ध.)
" वीज्यश्चालोमहर्षात् स्यात्—न वीज्यश्च लोमहर्षः स्यात् (ग ध.)
" " " —वीक्ष्याश्चनुलोमहर्षः (व.)

विषे दंशच्छेदाचूषणारिष्टादाहविज्ञापणवमनविरेकाः—

**तरुरिव मूलच्छेदाद्दंशच्छेदान्न वृद्धिमेति विषम् ।**
**आचूषणमानयनं जलस्य सेतुर्यथा तथाऽरिष्टाः ॥४४॥**

emblic myrobalan, red sandal blue water lily. heart-leaved sida, evening mallow, indian sarsaparilla, asafetida, indian groundsel, neem, trumpet flower, putranjiva, pigeon pea, trilobed virgin bower, vasaka, holy basil, kurchi seeds, patha alangy, winter cherry, colocynth yellow berried nightshade lac, variegated mountain ebony climbing asparagus, white siris, red physic nut, rough chaff, painted leaved uraria, dry extract of indian berberry white turpeth root, white mussel shell creeper costus, deodar, perfumed cherry white yam, pith of mahwa, fruits and bark of indian beech, turmeric, indian berberry and lodh; prepare 256 tolas of ghee with this in equal quantity of water and 768 tolas of cow's and goat's urine. This is curative of poison. When used as potion, inunction and nasal medication, it cures epilepsy, consumption insanity, spirit-possession, chronic poisoning, abdominal diseases anemia, helminthiasis, gulma, splenic disorders, spastic paraplegia, jaundice, stiffness of jaw and shoulder, and similar other disorders It can revive those that are apparently dead due to poisoning and strangulation. This ghee is known by the name of 'Nectar' and is the best antidote for all poisons. Thus has been described the Nectar-ghee.

सर्वविषे सामान्यचिकित्सा—

भवन्ति चात्र—

छत्री झर्झरपाणिश्च चरेद्रात्रौ तथा दिवा ।
तच्छायाशब्दवित्रस्ताः प्रणश्यन्त्याशु पन्नगाः २५०

अत्र च આ વિષયમાં इस विषयमें, भवन्ति શ્લોકો છે કે श्लोक हैं कि, दिवा દિવસે दिनमें, छत्री છત્રી छाता, रात्रौ झर्झरपाणिः च અને રાત્રે ચિરાયેલ વાંસ હાથમાં લઈ और रात्रिमें फूटे हुए बांसकी लकड़ी हाथमें लेकर, चरेत् ફરવું विचरण करे, तत् તેઓની उसकी, छायाशब्द- છાયા અને અવાજથી छाया और आवाजसे, वित्रस्ता. ત્રાસ પામેલા डरकर, पन्नगाः સર્પો सांप, आशु શીઘ્ર शीघ्र, प्रणश्यन्ति નાસી જાય છે भाग जाते हैं ॥ २५० ॥

Here are verses again—

250. One should move about with an umbrella in the day and a rattle in hand at night, so that snakes might get frightened by the shade and the noise respectively, and disappear

दष्टमात्रो दशेदाशु तं सर्पं लोष्टमेव वा ।
उपर्यरिष्टां बध्नीयाद्दंशं छिन्द्याद्दहेत्तथा ॥२५१॥

दष्टमात्रः કરડાતાં જ પુરુષે काटने पर तुरंत पुरुष, तम् તે उसी, सर्पम् સર્પને सांपको, लोष्टम् एव वा કે માટીના ઢેફાને या मिट्टीके ढेलेको, आशु शीघ्र जल्दी, दशेत् ડસવું काटे, उपरि ઉપર दंश स्थानके ऊपर, अरिष्टाम् અરિષ્ટા अरिष्टाको, बध्नीयात् બાંધવી बांध देवे. दंशम् અને દંશને और दंशस्थानको, छिन्द्यात् છેદવો काट डाले. तथा दहेत् અથવા બાળવો या जला देवे ॥ २५१ ॥

251. Immediately after the snake-bite one should bite the snake itself or even a clod of earth and tie a ligature above the bite and either tear open or cauterise the wound.

वज्रं मरकतः सारः पिचुको विषमूषिका ।
कर्केतनः सर्पमणिर्वैदूर्यं गजमौक्तिकम् ॥२५२॥

२५१. दंशं छिन्द्याद्दहेत्तथा—दंशं छित्त्वा दहेत वा (क)
२५२. कर्केतनः सर्पमणिर्वैदूर्य—कर्केतनं मणिः सर्पिर्वैदूर्यं (घ.)

**धार्यं गरमणिर्याश्च वरौषध्यो विषापहाः ।**
**खगाश्च शारिकाक्रौञ्चशिखिहंसशुकादयः ॥२५३॥**

**वज्रम्** હીરો वज्र, **मरकतः** મરકત मरकत, **सारः** સાર सार, **पिचुकः** પિચુક पिचुક, **विषमूषिका** વિષ-મૂષિકા विषमूषिका, **कर्केतनः** પદ્મરાગ पद्मराग, **सर्पमणिः** સર્પમણિ सर्पमणि, **वैदूर्यम्** લસણિયો वैदूर्य, **गजमौक्तिकम्** અને ગજમુક્તા और गजमुक्ता, **धार्यम्** ધારણ કરવાં જોઈએ धारण करे, **गरमणिः** ગરમણિ गरमणि, **याः च** અને જે और जो, **विषापहाः** વિષઘ્ન विषघ्न, **वरौषध्यः** શ્રેષ્ઠ ઔષધિઓ હોય તેને પણ ધારણ કરવી જોઈએ उत्तम औषधियाँ हों उनको भी धारण करना चाहिए, **शारिका** तथा મેના तथा मैना, **क्रौञ्च-** ક્રૌંચ क्रौंच, **शिखि-** મોર मोर, **हंस-** હંસ हंस, **शुकादयः** અને પોપટ વગેરે और तोता आदि, **खगाः च** પક્ષીઓ પણ પાળવાં જોઈએ पक्षियोंको अपने निवासस्थानमें रक्खे ॥२५२-२५३॥

252-253. The wearing on one's person of diamond, emarald, Sara, the pichuka grain, the bead that is antidote for mouse-poison, the ruby, the gem in the serpent's hood, the vaidurya, the elephant pearl and the anti-poison stone as well as of the anti-poison herbs gives immunity from poison. The rearing of birds such as Sarika, demoiselle crane, peacock, swan and parrot is beneficial.

अध्यायोक्तार्थसंग्रहः —

**तत्र श्लोकः—**
**इतीदमुक्तं द्विविधस्य विस्तरै-**
**बहुप्रकारं विषरोगभेषजम् ।**
**अधीत्य विज्ञाय तथा प्रयोजयन्**
**व्रजेद्विषाणामविषह्यतां बुधः ॥२५४॥**

**तत्र** તે વિષયમાં उस विषयमें, **श्लोकः** ઉપસંહારનો શ્લોક છે કે उपसंहारका श्लोक है कि, **इति** આ પ્રમાણે इस तरह, **इदम् द्विविधस्य बहुप्रकारम् विषरोगभेषजम्** આ બે પ્રકારના વિષથી થતા વિષરોગનું ઘણા પ્રકારનું ઔષધ यह दो प्रकारके विषसे होते हुए विषरोगकी बहुत प्रकारकी औषध, **विस्तरैः** વિસ્તારથી विस्तारसे, **उक्तम्** કહ્યું છે कही है, **अधीत्य** એને ભણી इसे पढ़कर, **विज्ञाय** तथा જાણીને और यथावत् समझकर, तथा તે પ્રમાણે उसी तरह, **प्रयोजयन्** પ્રયોગ કરનાર प्रयोग करता हुआ, **बुधः** સમજુ મનુષ્ય ज्ञानी पुरुष, **विषाणाम्** વિષોથી विषोंसे, **अविषह्यताम् व्रजेत्** અસહ્યતાને પામે છે અર્થાત્ વિષોથી પરાભૂત થતો નથી असह्यताको प्राप्त करता है अर्थात् विषोंसे पराभूत नहीं होता ॥ २५४ ॥

Here is the recapitulatory verse—

254. Thus, here has been given an elaborate exposition of the various methods of treatment of toxicosis of both the varieties. The wise physician after study and full understanding of the subject should apply the remedies and neutralise the effects of poison.

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते**
**चिकित्सास्थाने विषचिकित्सितं**
**नाम त्रयोविंशोऽध्यायः ॥२३॥**

**इति** આ પ્રમાણે इस प्रकार, **अग्निवेशकृते** અગ્નિવેશે રચેલા अग्निवेशसे बनाये, **चरकप्रतिसंस्कृते तन्त्रे** અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, **चिकित्सास्थाने** ચિકિત્સાસ્થાન વિષે चिकित्सास्थानमें, **विषचिकित्सितम्** 'વિષ-ચિકિત્સિત' 'विषचिकित्सित', **नाम** નામનો

२५३. गर–वर (ह.)
,, शारिकाक्रौञ्च–सारसाः क्रौञ्चाः (ग.)
२५४. द्विविधस्य–विविधस्य (ध.)

२५४. अधीत्य विज्ञाय तथा प्रयोजयन्–अधीत्य तत् सम्यगिह प्रयोजयेत् (ध.)
,, बुधः–भिषक् (फ.)

नामक, त्रयोविंशः ત્રેવીસમો तेईसवाँ, अध्यायः અધ્યાય સંપૂર્ણ થયો. अध्याय समाप्त हुआ ॥ २३ ॥

23. Thus in the Section on Therapeutics, in the treatise compiled by Agnivesa and revised by Caraka, the twenty-third chapter entitled 'The Therapeutics of Toxicosis' is completed.

---

## चतुर्विंशोऽध्यायः ।

## ચોવીસમો અધ્યાય अध्याय चौबीसवाँ

## Chapter XXIV

मदात्ययचिकित्सितोपक्रमः—

**अथातो मदात्ययचिकित्सितं व्याख्यास्यामः ॥१॥**
**इति ह स्माह भगवानात्रेयः ॥२॥**

अथ अतः હવે અહીંથી अब आगे, मदात्ययचिकित्सितम् 'મદાત્યયચિકિત્સિત' નામના અધ્યાયનું 'मदात्ययचिकित्सित' नामके अध्यायका, व्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

भगवान् ભગવાન भगवान, आत्रेयः આત્રેયે आत्रेयने, इति ह આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, आह स्म કહેલું છે कहा है ॥२॥

1. We shall now expound the chapter entitled 'The Therapeutics of Alcoholism'.

2. Thus declared the worshipful Atreya.

मद्यप्रशंसा—

**सुरैः सुरेशसहितैर्या पुरा परिपूजिता ।**
**सौत्रामण्यां हूयते या कर्मिभिर्या प्रतिष्ठिता ॥ ३ ॥**

**यज्ञौही या यया शक्रः सोमातिपतितो भृशम् ।**
**निरोजास्तमसाऽऽविष्टस्तस्माद्दुर्गात् समुद्धृतः ॥४॥**
**विधिभिर्वेदविहितैर्या यजद्भिर्महात्मभिः ।**
**इज्यया स्पृश्यया प्रकल्प्या च यज्ञीया यज्ञसिद्धये ॥५॥**
**योनिर्संस्कारनामाद्यैर्विशेषैर्बहुधा च या ।**
**भूत्वा भवत्येकविधा सामान्यान्मदलक्षणात् ॥६॥**
**या देवानमृतं भूत्वा स्वधा भूत्वा पितॄंश्च या ।**
**सोमो भूत्वा द्विजातीन् या युङ्क्ते श्रेयोभिरुत्तमैः ॥७॥**
**आश्विनं या महत्तेजो बलं सारस्वतं च या ।**
**वीर्यमैन्द्रं च या सिद्धा सोमः सौत्रामणौ च या ॥८॥**
**शोकारतिभयोद्वेगनाशिनी या महाबला ।**
**या प्रीतिर्या रतिर्या वाग्या पुष्टिर्या च निर्वृतिः ॥९॥**
**या सुरासुरगन्धर्वयक्षराक्षसमानुषैः ।**
**रतिः सुरेत्यभिहिता तां सुरां विधिना पिबेत् ॥१०॥**

या જે जो, पुरा પૂર્વકાળમાં पूर्वकालमें, सुरेशसहितैः ઇન્દ્ર इन्द्र, सहितैः સહિત सहित, सुरैः દેવતાઓથી देवोंसे, परिपूजिता પૂજાઈ છે अत्यन्त पूजी गई है, या જે जिसका, सौत्रामण्याम् સૌત્રામણિયજ્ઞમાં सौत्रामणियज्ञमें, हूयते હોમાય છે होम किया जाता है, या જે जो, कर्मिभिः કર્મકાંડીઓથી यज्ञकरनेवालोंसे, प्रतिष्ठिता પ્રતિષ્ઠા પામી છે प्रतिष्ठाको प्राप्त हुई है, या જે जो, यज्ञौही યજ્ઞનું વહન કરે છે यज्ञवाहक है, यया જેનાથી जिससे, सोम- સોમના અતિશય પાનથી सोमपानसे, अतिपतितः પડી ગયેલ गिरा हुआ, भृशम् અત્યન્ત अत्यन्त, निरोजाः ઓજરહિત ओजरहित, तमसा અને

---

३. सुरा—सुरा (ध)

४. यज्ञौही या यया शक्रः सोमातिपतितो भृशम्—यज्ञेऽभिषवस्तकस्य सोमस्यपभिषवो यथा (ब.)

,, सोमातिपतितो-सोमातिपरितः (फ.)

,, निरोजाः—नीरुजः (ख.)

६ एकविधा—एवंविधा (ब.)

७. द्विजातीन् या—द्विजातीनाम् (ध.)

८. बलं—वीर्य (ग. ड.)

,, वीर्यम्—बलम् (क. ग. घ. झ. ड. ब.)

,, वीर्यमैन्द्रं च या सिद्धा सोमः सौत्रामणौ च या—सौत्रामण्यां या सोमः सिद्धं शक्रबलं च या (य. फ.)

९. रतिः—मतिः (ध.)

અંધારામાં और तमसे **आविष्टः** પ્રવિષ્ટ થયેલ आविष्ट हुआ, **शक्रः** ઇન્દ્ર इन्द्र, **तस्मात्** તે उस, **दुर्गात्** ખાડામાંથી गड्ढेसे, **समुद्धृतः** ઉદ્ધૃત થયો છે निकाला गया है. **यज्ञीया** યજ્ઞસંબંધી यज्ञीय, **या** જે जो, **वेदे-** વેદમાં वेदमें, **विहितैः** કહેલ कही, **विधिभिः** વિધિ વડે विधिसे, **यजद्भिः** યજ્ઞ કરતા यज्ञ करनेवाले, **महात्मभिः** મહાત્માઓથી महात्माओंसे, **यज्ञ-** યજ્ઞની यज्ञकी, **सिद्धये** સિદ્ધિ માટે सिद्धिके लिए, **दृश्या** દર્શનને યોગ્ય दर्शनके योग्य. **स्पृश्या** સ્પર્શને યોગ્ય स्पर्शके योग्य, **प्रकल्प्या** અને અભિષવને યોગ્ય છે और अभिषवके योग्य है, **या च** વળી જે और जो, **योनि-संस्कार-** યોનિ, સંસ્કાર योनि, संस्कार, **नाम-** નામ नाम, **आद्यैः** આદિ आदि, **विशेषैः** વિશેષોથી विशिष्टताओंसे, **बहुधा** બહુ પ્રકારની बहुत प्रकारकी, **भूत्वा** હોવા છતાં પણ होते हुए भी, **मदलक्षणात्** મદને ઉત્પન્ન કરનારપણારૂપ मदजनक स्वरूप, **सामान्यात्** સામાન્યથી सामान्यसे, **एकविधा** એક જ પ્રકારની एकही प्रकारकी भवति જે होती है, **या** જે जो, **अमृतम्** અમૃત अमृत, **भूत्वा** બનીને बनकर, **देवान्** દેવોને देवोंको, **या** જે जो, **स्वधा** સ્વધા स्वधा, **भूत्वा** બનીને बनकर, **पितॄन्** પિતૃઓને पितरोंको, **या** અને જે और जो, **सोमः** સોમ सोम, **भूत्वा** બનીને बनकर, **द्विजातीन् च** બ્રાહ્મણોને ब्राह्मणोंको, **उत्तमैः** ઉત્તમ उत्तम **श्रेयोभिः** શ્રેયોથી कल्याणसे, **युङ्क्ते** જોડે છે युक्त करती है, **या** જે जो, **आश्विनम्** અશ્વિનીકુમારોનું अश्विनीकुमारका, **महत्** મહાન महान, **तेजः** તેજ છે तेज है, **या च** જે जो, **सारस्वतम्** સરસ્વતીનું सरस्वतीका, **बलम्** બળ છે बल है, **या च** જે जो, **ऐन्द्रम्** ઇંદ્રનું इन्द्रका, **वीर्यम्** વીર્ય છે वीर्य है, **सिद्धा** અને સિદ્ધ થયેલ और सिद्ध हुई, **या च** જે जो, **सौत्रामणौ** સૌત્રામણિ યજ્ઞમાં सौत्रामणि यज्ञमें, **सोमः** સોમરૂપ છે सोम है, **या** જે जो, **शोक-** શોક शोक, **अरति-** બેચેની बेचैनी, **भय-** ભય भय, **उद्वेग-** તથા ઉદ્વેગનો एवं उद्वेगका, **नाशिनी** નાશ કરનાર છે नाश करनेवाली है, **महाबला** જે મહાબળવાળી છે जो महान बलवाली है, **या** જે जो, **प्रीतिः** પ્રીતિ છે प्रीति है, **या** જે जो, **रतिः** રતિ છે रति है, **या** જે जो, **वाक्** વાણી છે वाणी है, **या** જે जो, **पुष्टिः** પુષ્ટિ છે पुष्टि है, **या च** અને જે और जो, **निर्वृतिः** સુખરૂપ છે सुखरूप है, **या** જેને जो, **सुर** દેવ देव, **असुर-** અસુર असुर, **गन्धर्व** ગંધર્વ गन्धर्व, **यक्ष-** યક્ષ यक्ष, **राक्षस-** રાક્ષસ राक्षस, **मानुषैः** અને મનુષ્યોથી और मनुष्योंसे, **रतिः** રતિ रति, **सुरा** તથા સુરા और सुरा, **इति** એ નામથી इस नामसे, **अभिहिता** કહેવામાં આવે છે कही जाती है, **ताम्** તેને इस, **सुराम्** સુરાને सुराको **विधिना** વિધિ પ્રમાણે विधिपूर्वक, **पिबेत** પીવી पीवे ॥ ३-१० ॥

3 10. Wine, that was greatly worshipped of old by the gods and their king that which was invited by the ritualist and established in the sacrifice called Sautramani, she that upholds the sacrifices, that by which devitalised Indra was uplifted from the impenetrable gloom of faintness into which he had fallen owing to excessive addiction to soma, that which is worthy of being seen touched and mixed by holy men who offer sacrifices in the manner prescribed by the vedas, that which is derived from a variety of sources and yet has the one common quality of intoxication, that which endows the gods with choicest prosperity in the form of ambrosia, the manes in the shape of 'Swadha' and the twice-born in the shape of 'Soma', that which is the splendour, might and the wisdom of the Aswin twins, that which is the power of Indra, that which is the 'Soma' prepared in the 'Sautramani' sacrifice, that which is the destroyer of sorrow, unhappiness, fear and distress, which is powerful, and which itself turns into and causes love joy. speech and nourishment, and

beatitude, that which has been praised as the joyful wine by the gods, Gandharvas, Yakshas, Rakshasas and mortals, should be taken in the enjoined manner.

सुरापानविधिः —

शरीरकृतसंस्कारः शुचिरुत्तमगन्धवान् ।
प्रावृतो निर्मलैर्वस्त्रैर्यथर्तूद्दामगन्धिभिः ॥११॥
विचित्रविविधस्रग्वी रत्नाभरणभूषितः ।
देवद्विजातीन् संपूज्य स्पृष्ट्वा मङ्गलमुत्तमम् ॥१२॥
देशे यथर्तुके शस्ते कुसुमप्रकरीकृते ।
सरसासंमते मुख्ये धूपसंमोदवोधिते ॥१३॥
सोपधाने सुसंस्तीर्णे विहिते शयनासने ।
उपविष्टोऽथवा तिर्यक् स्वशरीरसुखे स्थितः ॥१४॥
सौवर्णै राजतैश्चापि तथा मणिमयैरपि ।
भाजनैर्विमलैश्चान्यैः सुकृतैश्च पिबेत् सदा ॥१५॥
रूपयौवनमत्ताभिः शिक्षिताभिर्विशेषतः ।
वस्त्राभरणमाल्यैश्च भूषिताभिर्यथर्तुकैः ॥१६॥
शौचानुरागयुक्ताभिः प्रमदाभिरितस्ततः ।
संवाह्यमान इष्टाभिः पिबेन्मद्यमनुत्तमम् ॥१७॥
मद्यानुकूलैर्विविधैः फलैर्हरितकैः शुभैः ।
लवणैर्गन्धपिशुनैरवदंशैर्यथर्तुकैः ॥१८॥

११. प्रावृतो निर्मलैर्वस्त्रैर्यथर्तूद्दामगन्धिभिः–उद्दामगन्धिभिर्वस्त्रैर्विमलैर्वीतकञ्चुकैः (ध ब.)

१३. शस्ते कुसुमप्रकरीकृते–मृष्टे कुसुमप्रसरीकृते (क.)

,, प्रकरीकृते–प्रसरीकृते (ब.)

,, सरसासंमते–संवाससंमते (ब. ड. म.)

१५. विमलैश्चान्यैः–विविधैश्चित्रैः (ब.)

१६. रूपयौवन–शोभियौवन (ब्र. ड.)

,, विशेषतः–यथर्तुकैः (ख. ड.)

,, यथर्तुकैः–विभूषितः (ड.)

१७. संवाह्यमान इष्टाभिः–संचार्यमाणमिष्टाभिः (ध. ब.)

१८. मद्यानुकूलैर्विविधैः–पिबेन्मद्यानुकूलैर्वा (ड. त.)

मृष्टैर्मांसैर्बहुविधैर्भूजलाम्बरचारिणाम् ।
पौरोगवर्गविहितैर्भक्ष्यैश्च विविधात्मकैः ॥१९॥
पूजयित्वा सुरान् पूर्वमाशिषः प्राक् प्रयुज्य च ।
प्रदाय सजलं मद्यमर्थिभ्यो वसुधातले ॥२०॥

शरीर-कृत-संस्कारः स्नान वगेरे द्वारा शरीरनो संस्कार करी स्नान आदि द्वारा शरीरका संस्कार करके, शुचिः पवित्र थई पवित्र होकर, उत्तम- मनुष्ये उत्तम मनुष्य उत्तम, गन्धवान् चंदन वगेरेनुं अनुलेपन करी चन्दन आदिका अनुलेपन कर, यथर्तु- ऋतु मुजब ऋतुके अनुकूल, उद्दाम- तीव्र तीव्र, गन्धिभिः गंधवाळा गन्धोंसे युक्त, निर्मलैः निर्मळ निर्मल, वस्त्रैः वस्त्रो वस्त्रोंको, प्रावृतः पहेरी धारण किये हुए, विचित्र- विचित्र विचित्र, विविध- अने जुदी जुदी और विविध, स्रग्वी माळाओ पहेरेल मालायें पहने हुए, रत्न- रत्न रत्न, आभरण- अने आभूषणोथी और आभरणसे, भूषितः भूषित थई भूषित होकर, देव- देव देव, द्विजातीन् अने ब्राह्मणोने और ब्राह्मण इनको, संपूज्य पूजी पूजा करके, उत्तमम् उत्तम उत्तम मङ्गलम् मंगल वस्तुओनो मंगल वस्तुओंको, स्पृष्ट्वा स्पर्श करी स्पर्श करके, यथर्तुके ऋतुने अनुसार ऋतुके अनुकूल कुसुम- फूल फूल, प्रकरीकृते पाथरेल बिखरे हुए, सरसासंमते प्रियाओने इष्ट प्रियाओंको इष्ट, धूप- धूपनी धूपकी, संमोद- गन्धथी गन्धसे, वोधिते सुगन्धित भावित, शस्ते प्रशस्त प्रशस्त, मुख्ये अने श्रेष्ठ और उत्तम, देशे प्रदेशमां देशमें, विहिते मूकेलां रक्खे हुए, सोपधाने उपधानयुक्त उपधानयुक्त, सुसंस्तीर्णे सारी रीते बिछावेल अच्छी तरह बिछाये हुए,

१९. मृष्टैः–सृष्टैः (ब)

,, पौरोगवर्गविहितैः–पौरोगवैश्च विहितैः (ब. फ.)

,, विविधात्मकैः–विविधैरपि (फ)

२०. पूजयित्वा सुरान् पूर्वमाशिषः प्राक् प्रयुज्य च प्रदाय सजलं मद्यमर्थिभ्यो वसुधातले ॥ — पिबेत संपूज्य विबुधानाशिषः संप्रयुज्य च । प्रदाय सजलं चाग्रे स्वर्थिभ्यः पृथिवीतले (ध. फ.)

,, पूजयित्वा सुरान् पूर्वमाशिषः प्राक् प्रयुज्य च–पिबेत सुरां पूजयित्वा सुराशाशीः प्रयुज्य च (ध.)

,, अर्थिभ्यः–आदितः (ख. ड.)

,, ,, –आदित्ये (ड.)

स्व- પોતાના अपने, शरीर- શરીરને शरीरको, सुखे સુખ પડે તેમ सुखपूर्वक, शयन- શયન गद्दे, आसने અને આસન પર और बैठक पर, उपविष्टः બેસી बैठकर, अथवा અથવા अथवा, तिर्यक् આડા तिरछा, स्थितः પડીને रखकर, सौवर्णैः સુવર્ણનાં सुवर्णके, राजतैः च अपि રૂપાનાં चांदीके, तथा તથા तथा, मणिमयैः अपि મણિનાં रत्नके, सुकृतैः સારી રીતે બનાવેલ अच्छी प्रकार बनाये, अन्यैः બીજા अन्य, विमलैः સ્વચ્છ स्वच्छ, भाजनैः च પાત્રો વડે बरतनोंसे, सदा હરરોજ सदा, पिबेत् मद्य પીવું पीवे, रूप- રૂપ रूप, यौवन- અને યૌવનથી और यौवनसे, मत्ताभिः મત્ત मत्त, विशेषतः વિશેષે કરી विशेष करके, शिक्षिताभिः શિક્ષણ પામેલી शिक्षित, यथर्तुकैः ઋતુ અનુસાર ऋतुके अनुसार, वस्त्र- વસ્ત્ર वस्त्र, आभरण- આભૂષણ आभूषण, माल्यैः च અને માળાઓથી और मालाओंसे, भूषिताभिः ભૂષિત भूषित, शौच- પવિત્રતા पवित्रता, अनुराग- અને પ્રેમથી और अनुरागसे, युक्ताभिः યુક્ત युक्त, इष्टाभिः ઇષ્ટ इष्ट, प्रमदाभिः સ્ત્રીઓથી स्त्रियोंसे, इतः અહીં इधर, ततः તહીં उधर, संवाह्यमानः શરીર ચંપાવતાં अङ्गोंको दबाते हुए, पूर्वम् પ્રથમ पहले, सुरान् દેવતાઓને देवोंकी, पूजयित्वा પૂજીને पूजा करके, प्राक् અને પ્રથમ और प्रथम, आशिषः प्रयुज्य च સ્વસ્તિવાચન કરાવી स्वस्ति-वाचन कराके, वसुधातले પૃથ્વી ઉપર जमीन पर, अर्थिभ्यः અર્થીઓને अर्थियोंके लिए, सजलम् જલયુક્ત जलमिश्र, मद्यम् મદ્ય मद्य, प्रदाय આપીને दे कर, मद्य- મદ્યને मद्यके, अनुकूलैः અનુકૂળ अनुकूल, विविधैः જુદાં જુદાં विविध, शुभैः શુભકારી शुभ, हरितकैः હરિત વર્ગનાં हरित वर्गके, फलैः ફળોસહિત फलोंके साथ, यथर्तुकैः ઋતુને યોગ્ય ऋतुके योग्य, लवणैः લવણ नमकीन, गन्धविपुलैः ગન્ધદ્રવ્યથી યુક્ત गन्धबहुल, अवदंशैः અવદંશસહિત चटनी आदिके साथ, भू- ભૂમિ भूमि, जल- જલ जल, अम्बर- અને આકાશમાં और आकाशमें, चारिणाम् ફરનારાં પ્રાણીઓનાં फिरनेवाले जीवोंके, बहुविधैः વિવિધ विविध, मृष्टैः શેકેલાં भूने, मांसैः માંસોસહિત मांसोंके साथ, पौरोगवर्ग- અને રસોઇઆઓએ और सूपशास्त्रज्ञ पुरुषोंने, विहितैः બનાવેલા बनाये, विविधात्मकैः જુદાં જુદાં विविध, भक्ष्यैः ભક્ષ્યોસહિત भक्ष्योंके साथ, अनुत्तमम् ઉત્તમ उत्तम, मद्यम् मद्य मद्य, पिबेत् પીવું पीवे ॥ ११-२० ॥

11-20. Having attended to the internal and external needs of the body and having bathed and painted himself with fragrant sandal, a person must wear clean clothing along with ornaments and fragrances suitable to the season. Then decking himself with garlands of variegated flowers and with jewels and ornaments, he should worship the gods and the brahmanas and touch the most auspicious articles. Seating himself comfortably in a sitting or lounging position on a well-made bed with pillows, in a spot scattered with flowers that are best suited to each season and fumigated with fragrant smoke, he should drink wine always in vessels of gold or silver or vessels set with precious stones or other vessels clean and well shaped. He should drink while being shampood by clean, loving, beautiful, young and well trained women decked in fine clothes, jewels and flowers suitable to the season. He should eat while drinking, green fruits and salted fragrant flesh and other sauces agreeable to the wine and proper to the season, and the fried flesh of many kinds of creatures of the land, water and the air and many kinds of puddings made by expert cooks. He should drink, having before prayed to the gods and having first received their grace and

having poured the libations of wine on the earth mixed with water for the desiring spirits.

वातिकादीनां पानविधिः—

**अभ्यङ्गोत्सादनस्नानवासोधूपानुलेपनैः ।**
**स्निग्धोष्णैर्भावितश्चान्नैर्वातिको मद्यमाचरेत् ॥२१॥**

वातिकः વાતિક પુરુષે वातिक पुरुष, अभ्यङ्ग- અભ્યંગ अभ्यंग, उत्सादन- ઉત્સાદન उत्सादन, स्नान- સ્નાન स्नान, वासः- વસ્ત્ર वस्त्र, धूप- ધૂપન धूप, अनुलेपनैः અને અનુલેપનથી સુશોભિત થઈ और अनुलेपनसे सुशोभित हो कर, स्निग्ध- તથા સ્નિગ્ધ तथा स्निग्ध, उष्णैः અને ઉષ્ણ और उष्ण, अन्नैः च અન્નો अन्नका, भावितः ખાઈને भोजन करके, मद्यम् મદ્ય मद्य, आचरेत् પીવું पीवे ॥२१॥

21. The person of the vata habitus should take inunction, oil-massage and bath, and put on good raiment, treat himself to fragrant smoke and paint himself with sandal paste and should take the food prepared with unctuous and hot articles; after that he should drink wine.

**शीतोपचारैर्विविधैर्मधुरस्निग्धशीतलैः ।**
**पैत्तिको भावितश्चान्नैः पिबन्मद्यं न सीदति ॥२२॥**

पैत्तिकः પૈત્તિક પુરુષને पैत्तिक पुरुषको, विविधैः વિવિધ विविध, शीतोपचारैः શીતળ ઉપચારોથી शीतल उपचारोंसे, मधुर- મધુર मधुर, स्निग्ध- સ્નિગ્ધ स्निग्ध, शीतलैः અને શીતળ और शीतल, अन्नैः च અન્નનું अन्नोंसे, भावितः ભોજન કરીને भोजन करके, मद्यम् મદ્ય मद्य, पिबन् પીતાં पीते हुए, न सीदति હાનિ થતી નથી हानि नहीं होती ॥ २२ ॥

22. If the person with the pitta habitus after treating himself to various cooling things such as bath etc., and eating food consisting of sweet, unctuous and cooling articles, takes wine, it will not impair his health.

**उपचारैरशिशिरैर्यवगोधूमभुक् पिबेत् ।**
**श्लैष्मिको धन्वजैर्मांसैर्मद्यं मारिचकैः सह ॥२३॥**

अशिशिरैः ઉષ્ણ उष्ण, उपचारैः ઉપચારોથી યુક્ત થઈ उपचारोंसे भावित, यव- જવ जौ, गोधूम- અને ઘઉંનું और गेहू, भुक् ભોજન કરનાર खानेवाला, श्लैष्मिकः કફપ્રકૃતિ પુરુષે कफप्रकृति पुरुष, मारिचकैः મરીથી સંસ્કૃત मरिचसे संस्कृत, धन्वजैः જાંગલ પ્રાણીઓનાં जांगल जीवोंके, मांसैः માંસ मांसोंके, सह સાથે साथ, मद्यम् મદ્ય मद्य, पिबेत् પીવું पीवे ॥२३॥

23. The person of the kapha habitus living on food prepared of barley and wheat should treat himself to hot things and take the flesh of jangala animals prepared with black pepper and then take wine.

**विधिर्वसुमतामेष भविष्यद्विभवाश्च ये ।**
**यथोपपत्ति तैर्मद्यं पातव्यं मात्रया हितम् ॥२४॥**

वसुमताम् ધનાઢ્યોનો धनाढ्योंके लिए, एषः આ यह, विधिः વિધિ છે विधि है, ये च અને જેઓ और जो, भविष्यद्-विभवाः ભવિષ્યમાં ધનાઢ્ય થવાના હોય भविष्यमें वैभवयुक्त होमेवाले हों, तैः તેઓએ उनको, हितम् હિતકર્તા हितकर, मद्यम् મદ્ય मद्य, यथोपपत्ति પોતાની સ્થિતિ મુજબ अपनी स्थितिके अनुसार, मात्रया માત્રામાં मात्रापूर्वक, पातव्यम् પીવું पीना चाहिए ॥ २४ ॥

24. This is the procedure of drinkin gin the case of rich people and those

२१. वातिको मद्यमाचरेत्—पिबन्मद्यं न सीदति (थ.)

२३. मारिचकैः—मरिचकैः (त.)

२४. भविष्यद्विभवाश्च—भविष्यद्वसवश्च (फ.)

,, यथोपपत्ति तैर्मद्यम्—यथोपकल्पितं मद्यम् (थ.)

who are on the path to riches should treat themselves to things that are available according to their circumstances and should drink wine in wholesome doses.

**वातिकेभ्यो हितं मद्यं प्रायो गौडिकपैष्टिकम् ।**
**कफपित्ताधिकेभ्यस्तु मार्द्वीकं माधवं च यत् ॥२५॥**

**वातिकेभ्यः** વાતપ્રધાન પુરુષોને वातप्रबल पुरुषोंके लिए, **प्रायः** ઘણું કરી प्रायः, **गौडिक-** ગોળનું मद्य गुडका मद्य, **पैष्टिकम्** तथा લોટનું મદ્ય तथा आटेका मद्य, **कफपित्ताधिकेभ्यः** અને કફપિત્તાધિકને માટે और कफपित्तप्रबल पुरुषोंके लिए, **तु** તો तो, **यत्** જે जो, **मार्द्वीकम् च** દ્રાક્ષનું अङ्गूरोंका, **माधवम्** અને મધનું और शहदका, **मद्यम्** મદ્ય **છે** તે मद्य है वह, **हितम्** હિત કરનાર છે हितकर है ॥ २५ ॥

25. For persons of vata habitus, generally the wine prepared of gur and flour is wholesome; while the persons with kapha-cum-pitta habitus should take grape-wine or honey-wine.

विधिसेवितमद्यगुणाः—

**बहुद्रव्यं बहुगुणं बहुकर्म मदात्मकम् ।**
**गुणैर्दोषैश्च तन्मद्यमुभयं चोपलक्ष्यते ॥२६॥**

**बहुद्रव्यम्** બહુ દ્રવ્યમાંથી થનાર बहुत द्रव्योंसे बननेवाला, **बहुगुणम्** બહુ ગુણવાન बहुत गुणयुक्त, **बहुकर्म** બહુ કામ કરનાર बहुत कार्य करनेवाला, **मदात्मकम् च** અને મદ કરનાર और मद करनेवाला, **तत्** તે वह, **मद्यम्** મદ્ય मद्य, **गुणैः** ગુણ गुण, **दोषैः च** અને દોષો વડે और दोषोंसे, **उभयम्** બે પ્રકારનું અર્થાત્ ગુણકર અને દોષકર दो प्रकारका अर्थात् गुणकर और दोषकर, **उपलक्ष्यते** દેખાય છે देखा जाता है ॥२६॥

26. Wine is prepared from various substances and possesses various qualities. It has various actions on the body. It is intoxicating in nature. Hence it should be viewed from the point of view of both its good as well as its evil effects.

**विधिना मात्रया काले हितैरन्नैर्यथाबलम् ।**
**प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतं यथा ॥२७॥**

**यः** જે जो, **प्रहृष्टः** પ્રહૃષ્ટ પુરુષ प्रहृष्ट पुरुष, **काले** યોગ્ય કાળે योग्य कालमें, **विधिना** વિધિ પ્રમાણે विधिसे, **मात्रया** માત્રામાં मात्रामें, **यथाबलम्** બળ મુજબ बलके अनुसार, **हितैः** હિતકર हितकर, **अन्नैः** અન્નો સાથે अन्नोंके साथ, **मद्यम्** મદ્ય मद्य, **पिबेत्** પીએ છે पीता है, **तस्य** તેને માટે उसके लिए, **अमृतम् यथा** તે અમૃત સમાન वह अमृतके सदृश, **स्यात्** થાય છે होता है ॥ २७ ॥

27. If a person takes it in right manner, in right dose, in right time and along with wholesome food, in keeping with his vitality and with a cheerful mind, to him, wine is like ambrosia.

अविधिपीतमद्यदोषाः—

**यथोपेतं पुनर्मद्यं प्रसङ्गाद्येन पीयते ।**
**रूक्षव्यायामनित्येन विषवद्याति तस्य तत् ॥२८॥**

**रूक्ष-** રૂક્ષ દ્રવ્ય रूक्ष द्रव्य, **व्यायाम-** અને વ્યાયામનું और व्यायामका, **नित्येन** નિત્ય સેવન કરનાર પુરુષ नित्य सेवन करनेवाला पुरुष, **येन** જે जो, **पुनः** વળી फिर, **यथोपेतम्** જેવું મળે તેવું जैसा मिले वैसा, **मद्यम्** મદ્ય मद्य, **प्रसङ्गात्** અતિશય अतिशय, **पीयते** પીએ છે पीता है, **तस्य** તેને માટે उसके लिए, **तत्** તે वह, **विषवत्** વિષસમાન विषके सदृश, **याति** થાય છે हो जाता है ॥ २८ ॥

28. While to a person who drinks whatever kind comes in hand to him

---

२५. मार्द्वीकं माधवं च यत्—फाल्गमाधवशार्करम् (क. ख. ङ. त.)

२६. बहुकर्म मदात्मकम्—बहुकर्मप्रदात्मकम् (फ.)

,, उभयं चोपलक्ष्यते—उभयैश्चापदिश्यते (छ.)

and whenever he gets an opportunity and whose body is dry on account of constant exertion, this very wine acts as a poison.

मद्यस्य दशगुणाः तेषां कर्माणि च—

**मद्यं हृदयमाविश्य स्वगुणैरोजसो गुणान् ।**
**दशभिर्दश संक्षोभ्य चेतो नयति विक्रियाम् ॥२९॥**

मद्यम् मद्य मद्य, हृदयम् હૃદયમાં हृदयमें, आविश्य પેસીને प्रविष्ट हो कर, दशभिः स्वगुणैः પોતાના દશ ગુણો વડે अपने दस गुणोंसे, ओजसः ઓજના ओजके, दश દશ दश, गुणान् ગુણોને गुणोंको, संक्षोभ्य સંક્ષુબ્ધ કરીને क्षुब्ध करके चेतः ચિત્તને चित्तको, विक्रियाम् વિકૃત विकृत, नयति બનાવે છે बनाता है ॥ २९ ॥

29 Alcohol reaching the brain disturbs all the ten qualities of the vital essence by its ten-fold nature of action and thus leads to the derangement of the mind (protoplasmic poison).

**लघूष्णतीक्ष्णसूक्ष्माम्लव्यवाय्याशुगमेव च ।**
**रूक्षं विकाशि विशदं मद्यं दशगुणं स्मृतम् ॥३०॥**

मद्यम् મદ્યને मद्यको, लघु- લઘુ लघु, उष्ण- ઉષ્ણ उष्ण, तीक्ष्ण- તીક્ષ્ણ तीक्ष्ण सूक्ष्म- સૂક્ષ્મ सूक्ष्म, अम्ल- અમ્લ अम्ल, व्यवायि- વ્યવાયી व्यवायी, आशुगम् આશુકારી शीघ्र क्रिया करनेवाला, रूक्षम् રૂક્ષ रूक्ष, विकाशि વિકાશી विकाशी, विशदम् च एव અને વિશદ और विशद, दशगुणम् એ દશ ગુણવાળું इन दस गुणसे युक्त, स्मृतम् માન્યું છે माना है ॥ ३० ॥

30. They are—lightness, heat, acuteness, subtleness acidity, diffusiveness, quickness, dryness expansiveness and limpidness. These are described to be the ten qualities of alcohol.

**गुरु शीतं मृदु श्लक्ष्णं बहलं मधुरं स्थिरम् ।**
**प्रसन्नं पिच्छिलं स्निग्धमोजो दशगुणं स्मृतम् ॥३१॥**

ओजः ઓજ ओजको, गुरु ગુરુ गुरु, शीतम् શીત शीत, मृदु મૃદુ मृदु, श्लक्ष्णम् શ્લક્ષ્ણ श्लक्ष्ण, बहलम् બહલ बहल, मधुरम् મધુર मधुर स्थिरम् સ્થિર स्थिर, प्रसन्नम् પ્રસન્ન प्रसन्न पिच्छिलम् પિચ્છિલ पिच्छिल, स्निग्धम् અને સ્નિગ્ધ और स्निग्ध, दशगुणम् એ દશ ગુણવાળું इन दस गुणोंसे युक्त, स्मृतम् માન્યું છે माना है ॥ ३१ ॥

31. While heaviness, coldness, softness, smoothness, denseness, sweetness, fixity, clearness, viscidity and unctuousness are laid down as the ten qualities of vital essence.

**गुरुत्वं लाघवाच्छैत्यमौष्ण्यादम्लस्वभावतः ।**
**माधुर्यं मार्दवं तैक्ष्ण्यात्प्रसादं चाशुभावनात् ॥३२॥**
**रौक्ष्यात् स्नेहं व्यवायित्वात् स्थिरत्वं श्लक्ष्णतामपि ।**
**विकासिभावात्पैच्छिल्यं वैशद्यात्सान्द्रतां तथा॥३३॥**
**सौक्ष्म्यान्मद्यं निहन्त्येवमोजसः स्वगुणैर्गुणान् ।**
**सत्त्वं तदाश्रयं चाशु संक्षोभ्य जनयेन्मदम् ॥३४॥**

लाघवात् લઘુતાથી लघुतासे, गुरुत्वम् ગુરુતાને गुरुताको, औष्ण्यात् ઉષ્ણતાથી उष्णतासे, शैत्यम् શીતતાને शीतलताको, अम्ल- અમ્લ अम्ल, स्वभावतः સ્વભાવથી स्वभावसे, माधुर्यम् મધુરતાને मधुरताको, तैक्ष्ण्यात् તીક્ષ્ણતાથી तीक्ष्णतासे, मार्दवम् મૃદુતાને मृदुताको, आशुभावनात् च આશુકારી હોવાથી आशुकारी होनेसे, प्रसादम् પ્રસાદને प्रसादको, रौक्ष्यात् રૂક્ષતાથી रूक्षतासे, स्नेहम् સ્નેહને स्नेहको, व्यवायित्वात् વ્યવાયી હોવાથી व्यवायी होनेसे, स्थिरत्वम् સ્થિરતાને स्थिरताको, विकासिभावात् વિકાસી હોવાથી विकासी

३०. लघूष्णतीक्ष्णसूक्ष्माम्लव्यवाय्याशुगमेव च—लघुनस्तस्य तीक्ष्णाम्लव्यवायाशुगमनेन च (ध.)

३२. गुरुत्वं—गौरवं (फ.)

३४. जनयेत—कुरुते (फ. ब.)

होनेसे, श्लक्ष्णताम् अपि श्लक्ष्णताने श्लक्ष्णताको, वैशद्यात् विशदतार्थी विशदतासे, पैच्छिल्यम् पिच्छिलताने पिच्छिलताको, तथा तथा तथा सौक्ष्म्यात् सूक्ष्मताथी सूक्ष्मतासे, सान्द्रताम् सान्द्रताने सान्द्रताको, एवम् एम इस प्रकार, मद्यम् मद्य मद्य, स्वगुणैः पोताना गुणो वडे अपने गुणोंसे, ओजसः ओजना ओजके, गुणान् गुणोने गुणोंको, निहन्ति हणे छे नष्ट करता है, सत्त्वम् च मनने सत्त्वको, तदाश्रयम् अने ओजना आश्रय हृदयने और ओजके आश्रय हृदयको, आशु शीघ्र शीघ्र, संक्षोभ्य संक्षोभ पमाडीने क्षुब्ध करके, मदम् मद मद, जनयेत् पेदा करे छे उत्पन्न करता है ॥ ३२-३४ ॥

32-34. Heaviness is destroyed by lightness, coldness by heat, sweetness by acidity, softness by acuteness, clearness by quickness, unctuousness by dryness, fixity by diffusiveness, smoothness by expansiveness, viscidity by limpidness and density by subtleness. Thus alcohol by its characteristic actions destroys the ten qualities of the vital essence. It acts as a protoplasmic poison. As a result, alcohol agitates the mind, and its foundation, namely, the heart (brain), and quickly produces intoxication.

**रसवातादिमार्गाणां सत्त्वबुद्धीन्द्रियात्मनाम् ।**
**प्रधानस्यौजसश्चैव हृदयं स्थानमुच्यते ॥३५॥**

हृदयम् हृदय हृदय, रस- रस रस, वात- अने वातादिना और वातादिके, मार्गाणाम् मार्गोनुं मार्गोंका, सत्त्व- मन मन, बुद्धि- बुद्धि बुद्धि, इन्द्रिय- इन्द्रियो इन्द्रिय, आत्मनाम् तथा आत्मानुं और आत्माका, प्रधानस्य अने श्रेष्ठ और श्रेष्ठ, ओजसः च एव ओजनुं ओजका, स्थानम् स्थान स्थान, उच्यते कहेवाय छे कहा जाता है।

35. The heart is considered to be the seat of the circulatory channels of the body-nutrient fluid, the vata and other humors and of the mind, intellect and the senses, as also of the vital essence.

**अतिपीतेन मद्येन विहृतेनौजसा च तत् ।**
**हृदयं याति विकृतिं तत्रस्था ये च धातवः ॥३६॥**

अतिपीतेन अतिशय पीधेल अधिक मात्रामें पिये हुए, मद्येन मद्यथी मद्यसे, विहृतेन अभिहत अभिहत, ओजसा च ओजथी ओजसे, तत् ते वह, हृदयम् हृदय हृदय, विकृतिम् विकृत विकृति, याति पामे छे पाता है, तत्रस्थाः अने त्यां रहेल और उसमें स्थित, ये च जे जो, धातवः धातुओ होय छे तेओ पण विकृत थाय छे धातुएं हैं वे भी विकृत हो जाती हैं ॥ ३६ ॥

36. By excessive use of alcohol and the resulting impairment of the vital essence, the brain becomes disordered along with the body-elements situated there.

**ओजस्यविहृते पूर्वो हृदि च प्रतिबोधिते ।**
**मध्यमो विहृतेऽल्पे च विहृते तूत्तमो मदः ॥३७॥**

ओजसि ओज ओजके, अविहृते विकृत न थतां विकृत न होने पर, हृदि च अने हृदय और हृदयके, प्रतिबोधिते प्रतिबोधित थतां जागृत होने पर, पूर्वः प्रथम मद प्रथम मद, अल्पे च अल्प अल्प, विहृते विघात थवाथी विकृत होने पर, मध्यमः मध्यम मद (बीजो मद) मध्यम मद (दूसरा मद), विहृते अने संपूर्ण विघात थतां और पूर्णरूपमें विकृत होने पर तु तो तो, उत्तमः छेल्लो (त्रीजो) अन्तिम (तीसरा), मदः मद थाय छे मद होता है ॥ ३७ ॥

37. In the first stage of intoxication the vital essence is not affected but the mind becomes stimulated. In the

३५. वातादि—धात्वादि (ड. च. फ.)
,, ,, —रक्तादि (त.)

३६. अतिपीतेन—अतिशीतेन (च)
, याति विकृतिं—विकृतं याति (च.)

second stage the vital essence is slightly affected and in the third stage it is completely affected.

**नैवं विघातं जनयेन्मद्यं पैष्टिकमोजसः ।**
**विकाशिरूक्षविशदा गुणास्तत्र हि नोल्बणाः ॥३८॥**

पैष्टिकम् લોટનું आटेका, मद्यम् મદ્ય मद्य, एवम् કહેલા પ્રકારથી उक्त प्रकारसे, ओजसः ઓજનો ओजका, विघातम् નાશ नाश, न નથી नहीं, जनयेत् કરતું उत्पन्न करता, हि કારણકે क्योंकि, तत्र તેમાં उसमें, विकाशि- વિકાશિ विकाशि, रूक्ष- રૂક્ષ रूक्ष, विशदाः અને વિશદ और विशद, गुणाः ગુણો गुण, उल्बणाः તીવ્ર तीव्र, न હોતા નથી नहीं होते ॥ ३८ ॥

38. The wine prepared from flour does not produce much impairment of the vital essence, because the qualities of expansiveness, dryness and clearness are not in it in a pronounced degree.

मदलक्षणम्—

**हृदि मद्यगुणाविष्टे हर्षस्तर्षो रतिः सुखम् ।**
**विकाराश्च यथासत्त्वं चित्रा राजसतामसाः ॥३९॥**
**जायन्ते मोहनिद्रान्ता मद्यस्यातिनिषेवणात् ।**
**स मद्यविभ्रमो नाम्ना 'मद' इत्यभिधीयते ॥४०॥**

मद्यस्य મદ્યના मद्यके, अतिनिषेवणात् અતિ સેવનથી अधिक सेवनसे, हृदि હૃદયમાં हृदयमें, मद्य- મદ્યના मद्यके, गुण- ગુણો गुण, आविष्टे દાખલ થતાં प्रविष्ट होने पर, हर्षः હર્ષ हर्ष, तर्षः અભિલાષા अभिलाषा, रतिः રતિ रति, सुखम् સુખ सुख, यथासत्त्वम् તથા મન અનુસાર तथा मनके अनुसार, मोहनिद्रान्ताः અને મોહનિદ્રામાં અન્ત પામનારા और मोहनिद्रामें अन्त पानेवाले, चित्राः જુદા જુદા भिन्न भिन्न, राजस- રાજસ राजस, तामसाः च અથવા તામસ और तामस, विकाराः વિકારો विकार, जायन्ते થાય છે होते हैं, सः તે वह, मद्य- મદ્યજનિત मद्यजनित, विभ्रमः ભ્રમ भ्रम, मदः મદ मद, इति એ इस, नाम्ना નામથી नामसे, अभिधीयते કહેવાય છે कहा जाता है ॥ ३९-४० ॥

39-40. When the brain is affected by the action of alcohol, there will result exhilaration, ardent desire, exultation, sense of happiness and various kinds of changes according to the psychic make-up of the person and according to its rajasic or tamasic qualities. Owing to excessive use of alcohol, stupor terminating in narcosis is produced. This is the delusion caused by wine and is known as alcoholic intoxication.

मदस्य त्रयो भेदाः तेषां लक्षणानि च—

**पीयमानस्य मद्यस्य विज्ञातव्यास्त्रयो मदाः ।**
**प्रथमो मध्यमोऽन्त्यश्च लक्षणैस्तान् प्रचक्ष्महे ॥४१॥**

पीयमानस्य પીવાતા पिये हुए, मद्यस्य મદ્યના मद्यके, प्रथमः પ્રથમ प्रथम, मध्यमः મધ્યમ मध्यम, अन्त्यः च અને અન્ત્ય એ और अन्त्य ये, त्रयः ત્રણ तीन, मदाः મદ मद, विज्ञातव्याः જાણવા जानने चाहिए, तान् તેઓને इनको, लक्षणैः લક્ષણોદ્વારા लक्षणोंसे, प्रचक्ष्महे કહીએ છીએ कहते हैं ॥ ४१ ॥

41. Three stages of intoxication are observed in a person who drinks wine: the first, the middle or the second and the last or the third. We shall describe the characteristics of each of them.

**प्रहर्षणः प्रीतिकरः पानान्नगुणदर्शकः ।**
**वाद्यगीतप्रहासानां कथानां च प्रवर्तकः ॥४२॥**
**न च बुद्धिस्मृतिहरो विषयेषु न चाक्षमः ।**
**सुखनिद्राप्रबोधश्च प्रथमः सुखदो मदः ॥४३॥**

३८. जनयेत्—कुरुते (फ)
४०. मोहनिद्रान्ता—मोहनिद्रार्ता (ड. त.)
४१. प्रचक्ष्महे—प्रवक्ष्यते (ड. ब.)
४२. वाद्य—पाठ (द.)

**प्रथमः** પ્રથમ प्रथम, **मदः** મદ मद, **प्रहर्षणः** હર્ષ કરનાર हर्षको बढ़ानेवाला, **प्रीतिकरः** પ્રીતિ કરનાર प्रीति करनेवाला, **पान-** પાન पान, **अन्न-** અને અન્નના और भोजनके, **गुण-** ગુણોનો गुणोंको, **दर्शकः** દર્શક दिखानेवाला, **वाद्य-** વાદ્ય वाद्य, **गीत-** ગીત गीत, **प्रहासानाम्** હાસ્ય हास्य, **कथानाम् च** અને કથાઓનો और कथाओंकी, **प्रवर्तकः** પ્રવર્તક હોય છે प्रवृत्ति करानेवाला होता है, **बुद्धि-** બુદ્ધિ बुद्धि, **स्मृति-** તથા સ્મૃતિને और स्मृतिका, **हरः च** હરનાર नाशक, **न** નથી नहीं है, **विषयेषु** વિષયોમાં विषयोंके भोगमें, **अक्षमः च** અસમર્થ કરનાર असमर्थ करनेवाला, **न** નથી नहीं है, **सुख-** તથા સુખેથી एवं सुखसे, **निद्रा-** નિદ્રા निद्रा, **प्रबोधः** તથા જાગૃતિ કરનાર तथा जागृति करनेवाला, **सुखदः च** અને સુખદાતા છે और सुखदाता है ॥ ४२-४३ ॥

42-43. It produces exhilaration, delight, a finer discrimination of the qualities of food and drink, desire for music, song, jokes and stories. It does not impair the intellect or memory, and causes no incapacity for sense pleasures. It promotes sound sleep as well as happy awakening. This is the first and the happy stage of alcoholic effects.

**मुहुः स्मृतिर्मुहुर्मोहो(ऽ)व्यक्ता सज्जति वाङ्मुहुः ।**
**युक्तायुक्तप्रलापश्च प्रचलायनमेव च ॥४४॥**
**स्थानपानान्नसांकथ्ययोजना सविपर्यया ।**
**लिङ्गान्येतानि जानीयादाविष्टे मध्यमे मदे ॥४५॥**

**मध्यमे** મધ્યમ मध्यम **मदे** મદમાં मदमें, **आविष्टे** પ્રવેશ થતાં प्रविष्ट होने पर, **मुहुः** ઘડીકમાં क्षणमें, **स्मृतिः** સ્મૃતિ स्मृति, **मुहुः** ઘડીકમાં क्षणमें, **मोहः** મોહ मोह, **मुहुः** ઘડીકમાં क्षणमें, **अव्यक्ता वाक्** અસ્પષ્ટ વાણી अस्पष्ट वाणी, **सज्जति** તેમજ વાણીનું અટકી જવું एवं वाणीकी रुकावट, **युक्त-** યોગ્ય योग्य, **अयुक्त-** અને અયોગ્ય और अयोग्य, **प्रलापः च** બકવાદ प्रलाप, **प्रचलायनम् च एव** ચક્કર આવવાં चक्कर आना, **सविपर्यया** તથા વિપરીતતાસહિત तथा विपर्ययके साथ, **स्थान-** સ્થાન स्थान, **पान-** પાન पान, **अन्न-** ભોજન भोजन, **सांकथ्य-** અને વાતચીતની और वार्तालापकी, **योजना** યોજના योजना, **एतानि** એ इन, **लिङ्गानि** લક્ષણો लक्षणोंको, **जानीयात्** જાણવાં जाने ॥ ४४-४५ ॥

44-45. Fitful recollection, fitful forgetfulness, frequent indistinct, thick and laryngeal speech, indiscriminate talk, unsteady gait, impropriety in sitting, drinking, eating, and conversation —these are to be known as the symptoms of the second stage of alcoholic effects.

**मध्यमं मदमुत्क्रम्य मदमाप्राप्य चोत्तमम् ।**
**न किंचिन्नाशुभं कुर्युर्नरा राजसतामसाः ॥४६॥**

**राजस-** રાજસ राजस, **तामसाः** અને તામસ और तामस, **नराः** પુરુષો पुरुष, **मध्यमम्** મધ્યમ मध्यम, **मदम्** મદનું मदको, **उत्क्रम्य** ઉલ્લંઘન કરી लांघकर, **उत्तमम्** ઉંચા अन्त्य, **मदम् च** મદને मदको, **आप्राप्य** પ્રાપ્ત થતાં प्राप्त होकर, **किंचित्** એવું કોઈ પણ ऐसा कोई भी, **अशुभम्** અશુભ अशुभ, **न** નથી नहीं है, **कुर्युः** જે તેઓ કરે जो वे करते, **न** નહિ नहीं ॥ ४६ ॥

46. After transcending the second stage and before reaching the last stage, there is no impropriety which persons of the rajasic and tamasic nature will not commit.

**को मदं तादृशं विद्वानुन्मादमिव दारुणम् ।**
**गच्छेदध्वानमस्वन्तं बहुदोषमिवाध्वगः ॥४७॥**

**अस्वन्तम्** દુઃખકર અન્તવાળા दुःखकारक अन्तवाले, **बहुदोषम्** બહુ દોષવાળા बहुत दोषयुक्त,

४४. मोहोऽव्यक्ता—व्यक्ताऽव्यक्ता च (ध.)
,, प्रचलायनमेव च- प्रपलायनमेव च (ख. फ.)

४६. मदमाप्राप्य—मदमप्राप्य (ध)

अध्वानम् માર્ગે मार्ग पर, अध्वगः મુસાફર मुसाफिर, इव જેમ જતો નથી તેમ તે દષ્ટાંત લઈ जैसे नहीं जाता वैसे उस दृष्टांतको लेकर, उन्मादम् ઉન્માદ उन्माद, इव જેવા जैसे, दारुणम् દારુણ दारुण, मदम् મદને मदको, कः કયો कौन, विद्वान् સમજુ મનુષ્ય विद्वान मनुष्य, गच्छेत् પ્રાપ્ત કરે? અર્થાત્ પ્રાપ્ત ન કરે प्राप्त करे? अर्थात् प्राप्त न करे ॥ ४७ ॥

47. Which wise man would ever wish to be intoxicated to an extent which is as frightful as insanity even as no traveller will select a road which leads to an unhappy end and which is beset with many troubles?

**तृतीयं तु मदं प्राप्य भग्नदार्विव निष्क्रियः ।**
**मदमोहावृतमना जीवन्नपि मृतैः समः ॥४८॥**

तृतीयम् તૃતીય तृतीय, मदम् મદને मदको, तु તો तो, प्राप्य પ્રાપ્ત કરીને प्राप्त करके, भग्न- ભાંગેલા कटे हुए, दारु લાકડાની लकडेकी, इव પેઠે भांति, निष्क्रियः નિષ્ક્રિય निष्क्रिय, मद- મદ मद, मोह- તથા મોહથી और मोहसे, आवृत- આવૃત आवृत, मनाः મનવાળો મનુષ્ય मनवाला मनुष्य, जीवन् જીવતો जीवित, अपि છતાં પણ होने पर भी मृतैः મરેલા મનુષ્યો मृत मनुष्योंके, समः જેવો છે सदृश है ॥ ४८ ॥

48. Having reached the third stage of intoxication, he becomes paralysed like a felled tree with his mind submerged in intoxication and stupor, and though alive, resembles a dead man.

**रमणीयान् स विषयान्न वेत्ति न सुहृज्जनम् ।**
**यदर्थं पीयते मद्यं रतिं तां च न विन्दति ॥४९॥**

सः તે वह, रमणीयान् આનંદદાયક आनन्ददायक, विषयान् વિષયોને विषयोंको, न નથી नहीं, वेत्ति જાણતો पहिचानता, सुहृज्जनम् મિત્રોને પણ मित्रोंको भी, न નથી જાણતો नहीं जानता, यदर्थम् જેની ઇચ્છાથી जिसकी मतलबसे, मद्यम् મદ્યને मद्यको, पीयते પીએ છે पीता है, ताम् તે उस, रतिम् च સુખને પણ सुखको भी, न નથી नहीं, विन्दति મેળવતો प्राप्त करता ॥ ४९ ॥

49. He does not discriminate or recognise either the qualities of things or his friends. He does not possess even a sense of his own happiness for the very sake of which alcohol is drunk.

**कार्याकार्यं सुखं दुःखं लोके यच्च हिताहितम् ।**
**यदवस्थो न जानाति कोऽवस्थां तां व्रजेद्बुधः ॥५०॥**

यदवस्थः જે અવસ્થામાં રહી મનુષ્ય जिस अवस्थामें रह कर मनुष्य, लोके સંસારમાં संसारमें, कार्य- કાર્ય कार्य, अकार्यम् અકાર્ય अकार्य, सुखम् સુખ सुख, दुःखम् દુઃખ दुःख, यत् च અને જે और जो, हित- હિત हित, अहितम् તથા અહિત तथा अहित, न નથી नहीं, जानाति જાણતો जानता, ताम् તે उस, अवस्थाम् અવસ્થાને अवस्थामें, कः કયો कौन, बुधः ડાહ્યો પુરુષ बुद्धिमान, व्रजेत् પ્રાપ્ત કરે? जायेगा? ॥५०॥

50. Which wise man would like to attain that state in which he cannot discriminate between what ought to be done and what ought not to be done, between pleasure and pain and between what is good and what is evil in the world?

**स दूष्यः सर्वभूतानां निन्द्यश्चाग्राह्य एव च ।**
**व्यसनित्वादुदर्के च स दुःखं व्याधिमश्नुते ॥५१॥**

सः તે वह, सर्वभूतानाम् સર્વ પ્રાણીઓનો सब प्राणियोंका, दूष्यः દોષકર્તા दोषकर्ता, निन्द्यः च નિંદ્ય निन्द्य, अग्राह्यः च एव અને અગ્રાહ્ય થાય છે और

48. मदमोह—बहुमोह (घ.)

51. दूष्यः—सत्यः (ध.)
,, ,, —धृष्यः (फ.)

अग्राह्य होता है, सः ते वह, व्यसनित्वात् व्यसनीपणाने लीधे व्यसनी होनेसे, उदर्के परिणाममां परिणाममें, दुःखम् दुःखकारक दुःखकर, व्याधिम् च व्याधि व्याधि, अश्नुते मेळवे छे प्राप्त करता है ॥ ५१ ॥

51. On account of his addiction, he is condemned and censured by all people and is regarded an unworthy man by them, and he later on develops painful diseases as a result of his addiction.

मद्यदोषाः—

प्रेत्य चेह च यच्छ्रेयः श्रेयो मोक्षे च यत् परम् ।
मनःसमाधौ तत् सर्वमायत्तं सर्वदेहिनाम् ॥५२॥

सर्वदेहिनाम् प्राणीमात्रनुं सब प्राणियोंके लिए, प्रेत्य च जन्मान्तरमां जन्मान्तरमें, इह च अने आ लोकमां और इस लोकमें, यत् जे जो, श्रेयः श्रेय छे श्रेय है, मोक्षे च तथा मोक्षमां एवं मोक्षमें, यत् जे जो, परम् श्रेष्ठ श्रेष्ठ, श्रेयः कल्याण छे कल्याण है, तत् ते वह, सर्वम् सर्व सब, मनःसमाधौ मननी समाधिने मनकी समाधिको, आयत्तम् आधीन छे अधीन है ॥ ५२ ॥

52. For all men all that which is contributive of well-being in this life and the other, and happiness in that higher life of liberation, is established in the perfect tranquility of mind.

मद्येन मनसश्चास्य संक्षोभः क्रियते महान् ।
महामारुतवेगेन तटस्थस्येव शाखिनः ॥५३॥

महामारुतवेगेन जेम वायुना महान वेगथी जैसे वायुके बडे वेगसे, तटस्थस्य किनारा उपर रहेल किनारे पर स्थित, शाखिनः झाडने वृक्षको, इव महान क्षोभ करवामां आवे छे तेम महान क्षोभ किया जाता है वैसे, मद्येन मद्यथी मद्यसे, अस्य आना इसके, मनसः मनने मनमें, महान् महान महान, संक्षोभः च संक्षोभ संक्षोभ, क्रियते करवामां आवे छे किया जाता है ॥५३॥

53. Wine causes great agitation to such a tranquil mind, like the strong wind that shakes the trees on a bank.

मद्यप्रसङ्गं तं चाज्ञा महादोषं महागदम् ।
सुखमित्यधिगच्छन्ति रजोमोहपराजिताः ॥५४॥

रजः- रजोगुण रज, मोह- तथा मोहथी तथा मोहसे, पराजिताः पराजय पामेला पराजित, अज्ञाः अज्ञानीओ मूर्खलोग, महादोषम् महादोषवाळा महादोषयुक्त, महागदम् महारोगरूप महारोगरूप, तम् च ते वह, मद्यप्रसङ्गम् मद्यप्रसंगने मद्यसेवनको, सुखम् सुखद छे सुख देनेवाला है, इति एम ऐसा, अधिगच्छन्ति माने छे समझते हैं ॥ ५४ ॥

54. Ignorant men who are addicted to and are blinded by intoxication and overcome by passion and ignorance, consider the intoxicated state which is a greatly morbid and diseased condition, to be a state of happiness.

मद्योपहतविज्ञाना वियुक्ताः सात्त्विकैर्गुणैः ।
श्रेयोभिर्विप्रयुज्यन्ते मदान्धा मदलालसाः ॥५५॥

मद्य- मद्यथी मद्यसे, उपहत- नष्ट नष्ट, विज्ञानाः ज्ञानवाळा ज्ञानवाले, सात्त्विकैः सात्विक सात्त्विक, गुणैः गुणथी गुणसे, वियुक्ताः रहित रहित, मदान्धाः मदान्ध मदान्ध, मदलालसाः अने मदना लालचु लोको और मदके लोभी लोग, श्रेयोभिः कल्याणथी कल्याणसे, विप्रयुज्यन्ते विखूटा पडे छे अलग हो जाते हैं ॥ ५५ ॥

55. These men enslaved and blinded by alcoholism, are deprived of wisdom and sattwic qualities and are lost to all goodness.

मद्ये मोहो भयं शोकः क्रोधो मृत्युश्च संश्रितः ।
सोन्मादमदमूर्च्छायाः सापस्मारापतानकाः ॥५६॥

५४ चाज्ञा—ज्ञात्वा (ड. त फ. ब.)
,, पराजिताः—परायणाः (थ. फ.)

मद्ये મદ્યમાં मद्यमें, सोन्माद- ઉન્માદ उन्माद, मद- મદ मद, मूर्च्छायाः મૂર્ચ્છા मूर्च्छा, सापस्मार- અપસ્માર अपस्मार, अपतानकाः અને અપતાનક और अपतानक, मोहः મોહ मोह, भयम् ભય भय, शोकः શોક शोक, क्रोधः ક્રોધ क्रोध, मृत्युः च અને મૃત્યુ और मृत्यु, संश्रितः રહેલ છે आश्रित हैं ॥ ५६ ॥

56. Wine is also the cause of great delusion, fear, grief, anger and death as well as insanity, toxicosis, fainting, epilepsy and convulsions.

**एकः स्मृतिविभ्रंशस्तत्र सर्वमसाधुवत् ।**
**इत्येवं मद्यदोषज्ञा मद्यं गर्हन्ति यत्नतः ॥५७॥**

यत्र જ્યાં जहां, एकः એક एक, स्मृतिविभ्रंशः સ્મૃતિભ્રંશ છે स्मृतिभ्रंश है, तत्र ત્યાં वहां, सर्वम् બધુંય सब कुछ, असाधुवत् અશુભ જેવું છે बुरासा ही है, इति एवम् એમ इस प्रकार, मद्य- મદ્યના मद्यके, दोषज्ञाः દોષ જાણનારા दोषोंको जाननेवाले पुरुष, यत्नतः યત્નપૂર્વક यत्नपूर्वक, मद्यम् મદ્યને मद्यको, गर्हन्ति નિંદે છે निंद्य मानते हैं ॥ ५७ ॥

57. When a man is deprived of his very memory, then everything that follows upon it, is necessarily evil. Thus those who know the evils of drink, condemn the habit of drink strongly.

**सत्यमेते महादोषा मद्यस्योक्ता न संशयः ।**
**अहितस्यातिमात्रस्य पीतस्य विधिवर्जितम् ॥५८॥**

अहितस्य અહિતકર अहितकर, अतिमात्रस्य અતિમાત્રામાં अतिमात्रामें, विधिवर्जितम् તથા વિધિરહિત तथा विधिको छोड़कर, पीतस्य પીધેલા पिये हुए, मद्यस्य મદ્યના मद्यके, सत्यम् સાચેસાચ वास्तवमें, एते એ ये, महादोषाः મહાદોષો महादोष, उक्ताः કહ્યા છે कहे हैं, संशयः એમાં સંશય इसमें संशय, न નથી नहीं है ॥५८॥

58. True and undoubted indeed are these great evil effects described about wine, if it is unwholesome or taken in excess or taken disregarding the prescribed regulations.

मद्यस्य स्वभावेनान्नतुल्यत्वम्—

**किंतु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम् ।**
**अयुक्तियुक्तं रोगाय युक्तियुक्तं यथाऽमृतम् ॥५९॥**

किंतु પરંતુ परन्तु, मद्यम् મદ્ય मद्य, स्वभावेन एव સ્વભાવથી स्वभावसे ही, यथा જેવું जैसा, अन्नम् અન્ન છે अन्न है, तथा તેવું वैसा ही, स्मृतम् કહ્યું છે कहा गया है, अयुक्ति- અયોગ્ય રીતે अयोग्य रूपमें, युक्तम् વપરાતાં प्रयुक्त होने पर, रोगाय રોગને માટે છે रोगके लिए है, युक्ति- અને યોગ્ય રીતે और युक्तिपूर्वक, युक्तम् વપરાતાં प्रयुक्त होने पर, अमृतम् અમૃત अमृतके, यथा જેવું છે समान है ॥५९॥

59. But wine, by nature, is regarded similar to food in its effects. It is productive of disease if taken in improper manner, and is like ambrosia if taken in proper manner.

**प्राणाः प्राणभृतामन्नं तदयुक्त्या निहन्त्यसून् ।**
**विषं प्राणहरं तच्च युक्तियुक्तं रसायनम् ॥६०॥**

अन्नम् અન્ન अन्न, प्राणभृताम् પ્રાણીઓના प्राणियोंके, प्राणाः પ્રાણ છે प्राण हैं, अयुक्त्या પરંતુ અયોગ્ય રીતે સેવન કરવાથી परंतु युक्तिविरुद्ध सेवनसे, तत् તે वह, असून् પ્રાણનો प्राणोंको, निहन्ति નાશ કરે છે नष्ट करता है, विषम् જેમકે વિષ जैसेकि विष, प्राण- हरम् પ્રાણનાશક છે प्राणहर है, युक्ति- પરંતુ યુક્તિપૂર્વક परंतु युक्तिपूर्वक, युक्तम् યોગ્યેજેવું प्रयुक्त, तत् च તે वह रसायनम् રસાયનરૂપ છે रसायनरूप है ॥६०॥

60. Food, which is the life of living creatures, if taken in improper manner

५७. असाधुवत्—असाधुवत (ब.)
,, गर्हन्ति—निन्दन्ति (ह. य ब.)
,, यत्नतः—तत्त्वतः (ह.)
५८. विधिवर्जितम्—विधिवर्जनम् (ह.)

destroys life, and even poison, which by nature is destructive of life, if taken in proper manner, acts as an elixir.

युक्तिपीतमद्यगुणाः —

**हर्षमूर्जं मुदं पुष्टिमारोग्यं पौरुषं परम् ।**
**युक्त्या पीतं करोत्याशु मद्यं सुखमदप्रदम् ॥६१॥**

**युक्त्या** યુક્તિપૂર્વક युक्तिपूर्वक, **पीतम्** પીધેલ पिया हुआ, **सुख-** સુખ सुखकर, **मद-** મદ मद **प्रदम्** આપનાર देनेवाला, **मद्यम्** મદ્ય मद्य, **हर्षम्** હર્ષ हर्ष, **ऊर्जम्** ઉત્સાહ उत्साह, **मुदम्** સંતોષ संतोष, **पुष्टिम्** પુષ્ટિ पुष्टि, **आरोग्यम्** આરોગ્ય आरोग्य, **परम्** અને પરમ और श्रेष्ठ **पौरुषम्** પૌરુષ पौरुषको, **आशु** શીઘ્ર शीघ्र, **करोति** ઉત્પન્ન કરે છે उत्पन्न करता है ॥ ६१ ॥

61. Wine taken in proper manner soon gives exhilaration, courage, delight, strength, health, great manliness and joyous intoxication.

**रोचनं दीपनं हृद्यं स्वरवर्णप्रसादनम् ।**
**प्रीणनं बृंहणं बल्यं भयशोकश्रमापहम् ॥६२॥**
**स्वापनं नष्टनिद्राणां मूकानां वाग्विबोधनम् ।**
**बोधनं चातिनिद्राणां विबद्धानां विबन्धनुत् ॥६३॥**
**वधबन्धपरिक्लेशदुःखानां चाप्यबोधनम् ।**
**मद्योत्थानां च रोगाणां मद्यमेव प्रबाधकम् ॥६४॥**

**रोचनम्** મદ્ય રુચિ કરનાર मद्य रुचिकारक, **दीपनम्** દીપન दीपन **हृद्यम्** હૃદ્ય हृद्य **स्वर-** સ્વર स्वर, **वर्ण-** અને વર્ણનો और वर्ण, **प्रसादनम्** પ્રસાદ કરનાર बढ़ानेवाला, **प्रीणनम्** પ્રીણન प्रीणन, **बृंहणम्** બૃંહણ वृंहण, **बल्यम्** બલ્ય बल्य, **भय-** ભય भय, **शोक-** શોક शोक, **श्रम-** અને શ્રમનો और श्रमका, **अपहम्** નાશક છે नाशक है, **नष्टनिद्राणाम्** જેઓને નિદ્રા ન આવતી હોય એવા મનુષ્યોને नींद न आनेवालोंके लिए, **स्वापनम्** ઊંઘ લાવનાર नींद लानेवाला, **मूकानाम्** મૂંગાની मूंगोंके लिए, **वाक्-** વાણીને वाणीको, **विबोधनम्** ખોલનાર जागृत करनेवाला, **अतिनिद्राणाम्** બહુ નિદ્રાવાળાને बहुत निद्रा लेनेवालोंको, **बोधनम्** જગાડનાર जागृत करनेवाला, **विबद्धानाम् च** અને વિબંધવાળાના और विबन्धवालोंके, **विबन्धनुत्** વિબંધને દૂર કરનાર છે विबन्धको दूर करनेवाला है **वध-** તેમજ વધ एवं वध, **बन्ध-** બંધન बन्धन, **परिक्लेश-** અત્યન્ત ક્લેશ अत्यन्त क्लेश, **दुःखानाम् च** તથા દુઃખોનો और दुःखोंका, **अपि** પણ भी, **अबोधनम्** અનુભવ થવા ન દેનાર છે अनुभव न होने देनेवाला है, **मद्यम् च एव** વળી મદ્ય और मद्य ही, **मद्योत्थानाम्** મદ્યજનિત मद्यजनित, **रोगाणाम्** રોગોનું रोगोंका, **प्रबाधकम्** નાશક છે नाशक है ॥६२-६४॥

62 64 It is an appetiser, digestive-stimulant, cordial, promoter of voice and complexion and is nourishing, roborant and strengthening. It relieves fear, grief and fatigue It acts as a soporific to those suffering from insomnia and as a stimulant of speech in reticent people. It keeps awake people given to excess of sleep and relieves obstruction in the body-passages, renders the mind unconscious of the pain of trauma, ligature and other kinds of pain and suffering. It acts as a cure for the disorders resulting from alcoholism.

**रतिर्विषयसंयोगे प्रीतिसंयोगवर्धनम् ।**
**अपि प्रवयसां मद्यमुत्सवामोदकारकम् ॥६५॥**

६१. हर्षमूर्जं मुदं–हर्षमीर्ष्यामिदम् (ग.)
,, परम्–बलम् (ध.)
,, सुखमदप्रदम्–मद्यसुखावहम् (ध.)
,, ,, –मदसुखावहम् (छ.)
६३ वाग्विबोधनम्–वाक्यबन्धनम् (फ.)
६४ चाप्यबोधनम्–चावमोहनम् (ड.)
,, प्रबाधकम्–प्रसाधकम् (झ.)
,, ,, –प्रबोधकम् (ध.)

६५. संयोगे–संयोग (त.)
,, संयोगवर्धनम्–सौभाग्यवर्धनम् (फ. ब.)

वृषण भी, विशीर्यते ખરી પડે છે गिर जाते हैं ॥ १७२-१७४½ ॥

172-174½. There will be acute burning pain as if burnt by fire, and pain in bladder, testes, perineum and groin. Sometimes there is slimy, yellowish white discharge; the part may be swollen; there may be dull pain, induration and scanty discharge. It may take time to suppurate or may abate quickly or it may be infected with parasites; and it becomes softened and putrid in smell The glans penis drops off, or even the whole phallus and scrotum may slough out.

ध्वजभङ्गकृतं क्लैब्यमित्येतत् समुदाहृतम् ॥१७५॥
एतं पञ्चविधं केचिद्ध्वजभङ्गं प्रचक्षते ।

इति एतत् આ यह, ध्वजभङ्गकृतम् ધ્વજભંગ-જન્ય ध्वजभंगजन्य, क्लैब्यम् નપુંસકતા नपुंसकता, समुदाहृतम् કહેવાય છે कहाती है, एतत् આને इसे, केचित् કેટલા कई एक, पञ्चविधम् પાંચ પ્રકારનો पांच प्रकारका, ध्वजभङ्गम् ધ્વજભંગ ध्वजभङ्ग, प्रचक्षते કહે છે कहते हैं ॥ १७५½ ॥

175-175½. Thus has been described the impotency resulting from the disorders of the phallus. Some describe these disorders of the phallus as being of five kinds.

जरासंभवक्लैब्यलक्षणम्—

क्लैब्यं जरासंभवं हि प्रवक्ष्याम्यथ तच्छृणु ॥१७६॥
जघन्यमध्यप्रवरं वयस्त्रिविधमुच्यते ।
अतिप्रवयसां शुक्रं प्रायशः क्षीयते नृणाम् ॥१७७॥

अथ હવે अब, जरासंभवम् જરાજન્ય जराजन्य, क्लैब्यम् નપુંસકતા नपुंसकताको, प्रवक्ष्यामि કહું हूं कहता हूं, तत् તે उसे, शृणु સાંભળો सुनो, वयः વય वय, जघन्य- જઘન્ય जघन्य, मध्य- મધ્ય मध्य, प्रवरम् અને પ્રવર और प्रवर, त्रिविधम् એ ત્રણ પ્રકારનું इन तीन प्रकारकी, उच्यते કહેવાય છે कहाती है, अतिप्रवयसाम् અતિવૃદ્ધ अतिवृद्ध, नृणाम् મનુષ્યોનું मनुष्योंका, शुक्रम् શુક્ર शुक्र, प्रायशः પ્રાયઃ प्रायः, क्षीयते ક્ષીણ થાય છે क्षीण होता है ॥ १७६-१७७ ॥

176-177. Listen now as I describe the geratic impotency. Age is classified into three divisions: childhood, adulthood and senascence. The semen in senile persons gets generally low or diminished.

रसादीनां संक्षयाच्च तथैवावृष्यसेवनात् ।
बलवीर्येन्द्रियाणां च क्रमेणैव परिक्षयात् ॥१७८॥
परिक्षयादायुषश्चाप्यनाहाराच्छ्रमात् क्लमात् ।
जरासंभवजं क्लैब्यमित्येतैर्हेतुभिर्नृणाम् ॥१७९॥
जायते तेन सोऽत्यर्थं क्षीणधातुः सुदुर्बलः ।
विवर्णो दुर्बलो दीनः क्षिप्रं व्याधिमथाश्नुते ॥१८०॥
एतज्जरासंभवं हि

रसादीनाम् રસાદિ ધાતુઓનો रसादि धातुओंका, संक्षयात् ક્ષય क्षय, तथा एव अवृष्यसेवनात् અવૃષ્ય પદાર્થોનું સેવન अवृष्य पदार्थोंका सेवन, बल- બળ बल, वीर्य- વીર્ય वीर्य, इन्द्रियाणाम् અને ઇન્દ્રિયોનો और इन्द्रियोंका, क्रमेण एव ક્રમશઃ क्रमशः, परिक्षयात् ક્ષય क्षय, आयुषः च अपि આયુષ્યનો आयुका, परिक्षयात् ક્ષય क्षय, अनाहारात् આવશ્યક ખોરાક ન લેવો आवश्यक आहार न लेना, श्रमात् શ્રમ श्रम, क्लमात् અને ક્લમ और क्लम, इति एभिः हेतुभिः આ હેતુઓથી

१७५½. एतं-एवं (क. ख.)
,, प्रचक्षते-वदन्त्यपि (ख.ङ.)

१७८. रसादीनां संक्षयाच्च-धातूनां संक्षयाद्वापि (क.)
१८०. तेन सोऽत्यर्थं-येन पुरुषः (ख.)
,, दुर्बलः-विह्वलः (ख.)
,, क्षिप्रं व्याधिमथाश्नुते-आशाविव्याधिमृच्छति (ख.)

इन हेतुओंसे नृणाम् મનુષ્યોને मनुष्योंके, जरासंभवम् વૃદ્ધાવસ્થાજન્ય वृद्धावस्थाजन्य, क्लैब्यम् નપુંસકતા नपुंसकता, जायते ઉત્પન્ન થાય છે उत्पन्न होती है, तेन તેથી उससे, सः તે वह, अत्यर्थम् અત્યન્ત अत्यन्त क्षीणधातुः ક્ષીણધાતુવાળો क्षीणधातुवाला, सुदुर्बलः અતિ દુર્બળ अति दुर्बल विवर्णः વિવર્ણ विवर्ण, दुर्बल દુર્બળ दुर्बल दीनः તથા દીન થઈને तथा दीन होकर, क्षिप्रम् શીઘ્ર शीघ्र, व्याधिम् રોગને रोगको, अश्नुते પામે છે पाता है, एतत् આ यह, जरासंभवम् हि જરાજન્ય નપુંસકતા છે जराजन्य नपुंसकता है ॥ १७८-१८०½ ॥

178-180½ Owing to diminution of the nutrient fluid and other body elements and the constant use of things which are detrimental to male-hood by gradual diminution of strength vitality, the power of the sense organs and of the life-span, and owing to inanition fatigue and exhaustion there occurs geratic impotency in man. Affected by this, he becomes extremely wasted in all the body elements very weak, poor in complexion physically and mentally depressed, and soon falls a victim to diseases These are the characteristics of gerative impotency.

धातुक्षयजक्लैब्यलक्षणम् —

चतुर्थं क्षयजं शृणु ।
अतीव चिन्तनाच्चैव शोकात्क्रोधाद्भयात्तथा ॥१८१॥
ईर्ष्योत्कण्ठामदोद्वेगान् सदा विशति यो नरः ।
कृशो वा सेवते रूक्षमन्नपानं तथौषधम् ॥१८२॥
दुर्बलप्रकृतिश्चैव निराहारो भवेद्यदि ।
असात्म्यभोजनाच्चापि हृदये यो व्यवस्थितः ॥१८३॥
रसः प्रधानधातुर्हि क्षीयेताशु ततो नृणाम् ।
रक्तादयश्च क्षीयन्ते धातवस्तस्य देहिनः ॥१८४॥
शुक्रावसानास्तेभ्योऽपि शुक्रं धाम परं मतम् ।

चतुर्थं ચોથું चौथी क्षयजम् ક્ષયજન્ય નપુંસકપણું क्षयजन्य नपुंसकताको, शृणु સાંભળો सुनो, अतीव અતિ अति, चिन्तनात् ચિન્તાથી चिन्तासे, शोकात् શોકથી शोकसे, क्रोधात् ક્રોધથી क्रोधसे, तथा भयात् ભયથી भयसे, यः नरः અને જે માણસ और यदि मनुष्य, सदा હમેશાં सदा, ईर्ष्या- ઈર્ષ્યા ईर्ष्या, उत्कण्ठा- ઉત્કંઠા उत्कण्ठा, मद- મદ मद, उद्वेगान् તથા ઉદ્વેગનું और उद्वेगका, विशति સેવન કરે છે सेवन करता है, कृशः वा અથવા કૃશ થઈ अथवा कृश होकर, रूक्षम् જે તે રૂક્ષ यदि वह रूक्ष, अन्नपानम् અન્નપાન अन्नपान, तथा તથા तथा, औषधम् ઓષધોનું औषधोंका, सेवते સેવન કરે છે सेवन करता है दुर्बलप्रकृतिः च एव અથવા દુર્બળ પ્રકૃતિવાળો થઈ अथवा दुर्बल प्रकृतिवाला होकर, यदि જો यदि निराहारः भवेत् તે જોઈતા આહારનો ત્યાગ કરે છે वह आवश्यक आहारका त्याग करता है, असात्म्यभोजनात् च अपि અથવા અસાત્મ્ય ભોજન કરે છે अथवा असात्म्य भोजन करता है, नृणाम् તો તેથી મનુષ્યના तो उससे मनुष्यके, हृदये હૃદયમાં हृदयमें, यः જે जो, प्रधानधातुः પ્રધાનધાતુ प्रधान धातु रसः રસ रस, व्यवस्थितः રહેલો છે अवस्थित है, आशु क्षीयेत हि તે તરત ક્ષીણ થાય છે वह शीघ्र क्षीण होता है, ततः તેથી इससे, तस्य देहिनः તે મનુષ્યની उस मनुष्यकी, रक्तादयः રક્તથી માંડી रक्तसे लेकर, शुक्रावसानाः શુક્ર પર્યન્ત शुक्र पर्यन्तके, धातवः ધાતુઓ धातु, आशु શીઘ્ર शीघ्र, क्षीयन्ते ક્ષીણ થાય છે क्षीण होते हैं, तेभ्यः अपि તેઓમાં પણ उनमें भी शुक्रम् શુક્રને शुक्र परमम् धाम પરમ તેજ परम तेज, मतम् માનેલ છે माना है ॥१८१-१८४½॥

181-184½. Hear now about the fourth kind of impotency born of

१८१. अतीव चिन्तनात्–अतिप्रचिन्तनात (क.)
,, तथा–अपि (घ)

१८२. ईर्ष्योत्कण्ठामदोद्वेगान् सदा विशति–ईर्ष्योत्कण्ठाभयोन्मादान् समाविशति (ख. ग.)

१८३ असात्म्यभोजनात–असात्म्यभोजनात (ख.)

१८४½. तेभ्योऽपि–तेभ्यो हि (ग.)

wasting. By costant indulgence in worry, grief, anger, fear, envy, eagerness, intoxication and anxiety; by ununctuous eats and drinks or un-unctuous remedies resorted to by a man who is emaciated; by resort to fasting by one who is weak by nature, and by unwholesome diet, the nutrient fluid which is the primary body-element and whose habitat is the stomach, gets soon diminished. Consequently, the blood and the other body elements leading upto the seminal secretion get diminished. The semen is considered the highest or the final product and state of the body-elements.

चेतसो वाऽतिहर्षेण व्यवायं सेवतेऽति यः ॥१८५॥
तस्याशु क्षीयते शुक्रं ततः प्राप्नोति संक्षयम् ।
घोरं व्याधिमवाप्नोति मरणं वा स गच्छति ॥१८६॥
शुक्रं तस्माद्विशेषेण रक्ष्यमारोग्यमिच्छता ।
एवं निदानलिङ्गाभ्यामुक्तं क्लैब्यं चतुर्विधम् ॥१८७॥

चेतसः वा અથવા તો ચિત્તના अथवा तो चित्तके, अतिहर्षेण અતિ કામાભિભૂતપણાથી अति कामाभिभूत होनेसे, यः જે जो, व्यवायम् મૈથુનનું मैथुनका, अतिसेवते અતિ સેવન કરે છે अति सेवन करता है, तस्य તેનું उसका, शुक्रम् શુક્ર शुक्र, आशु જલદી शीघ्र, क्षीयते ક્ષીણ થાય છે क्षीण होता है, ततः તેથી इससे, सः તે वह, संक्षयम् સર્વનાશને सर्वनाशको, प्राप्नोति પ્રાપ્ત કરે છે प्राप्त होता है, घोरम् ભયંકર भयंकर, व्याधिम् રોગને रोगको, अवाप्नोति પ્રાપ્ત થાય છે प्राप्त होता है मरणम् वा અથવા તો મરણને अथवा तो मृत्युको, गच्छति પામે છે प्राप्त होता है तस्मात् તેથી इसी लिए, आरोग्यम् આરોગ્યને आरोग्यको, इच्छता ઇચ્છનાર પુરુષે चाहनेवाले पुरुषको, शुक्रम् શુક્રની शुक्रकी, विशेषेण વિશેષ રૂપે विशेष रूपमे रक्ष्यम् રક્ષા કરવી જોઈએ रक्षा करनी चाहिए, एवम् આ પ્રમાણે इस प्रकार, निदान- નિદાન निदान, लिङ्गाभ्याम् અને લક્ષણો-સહિત और लक्षणोंसमेत, चतुर्विधम् ચાર પ્રકારનું चार प्रकारकी, क्लैब्यम् નપુંસકપણું नपुंसकता, उक्तम् કહ્યું છે कही है ॥ १८५-१८७ ॥

185-187. If such a man, getting mentally excited and passionate, indulges excessively in sex, his semen gets soon exhausted and he becomes emaciated and will be subject to serious ailment or death itself. Therefore, one desirous of protecting his health, should specially preserve one's semen. Thus have been described the four kinds of impotency with their etiology and signs and symptoms.

एकीयमतेन क्लैब्यनिदानम्—
केचित् क्लैब्ये त्वसाध्ये द्वे ध्वजभङ्गक्षयोद्भवे ।
वदन्ति शेफसश्छेदाद्वृषणोत्पाटनेन च ॥१८८॥

केचित् કેટલાક कई एक, ध्वजभङ्ग- ધ્વજભંગ-જન્ય ध्वजभंगजन्य, क्षयोद्भवे અને ક્ષયજ और क्षयज, द्वे બે दो, क्लैब्ये નપુંસકતાઓને नपुंसकताओंको, असाध्ये અસાધ્ય असाध्य, वदन्ति કહે છે कहते हैं, तथा તથા तथा, शेफसः લિંગના लिंगके, छेदात् છેદનથી छेदनसे, वृषण- અને વૃષણોને और वृषणोंको, उत्पाटनेन च કાઢી નાખવાથી ઉત્પન્ન થયેલી નપુંસકતાને પણ અસાધ્ય કહે છે निकाल देनेसे उत्पन्न हुई नपुंसकताको भी असाध्य कहते हैं ॥ १८८ ॥

188. Some say that the two kinds of impotency i.e. the one due to diseases of the phallus and the other to wasting, are incurable; similarly the impotency due to amputation of the penis or excision of the testes is regarded incurable.

१८६. संक्षयम्- स क्षयम् (क.)

**मातापित्रोर्बीजदोषादशुभैश्चाकृतात्मनः ।**
**गर्भस्थस्य यदा दोषाः प्राप्य रेतोवहाः सिराः ॥१८९॥**
**शोषयन्त्याशु तन्नाशाद्रेतश्चाप्युपहन्यते ।**
**तत्र संपूर्णसर्वाङ्गः स भवत्यपुमान् पुमान् ॥१९०॥**
**एते त्वसाध्या व्याख्याताः सन्निपातसमुच्छ्रयात् ।**

मातापित्रोः માતાપિતાના मातापिताके, बीजदोषात् શુક્ર-શોણિતના દોષથી बीजके दोषसे, गर्भस्थस्य च અને ગર્ભસ્થિત और गर्भस्थित, अकृतात्मनः પાપાત્માના पापात्माके, अशुभैः પૂર્વકૃત પાપકર્મોથી पूर्वकृत पापोंसे, यदा જ્યારે जब, दोषाः દોષો दोष, रेतोवहाः શુક્ર-વાહિની शुक्रवाहिनी, सिराः ધમનીઓમાં धमनियोंमें, प्राप्य પહોંચીને पहुँचकर, शोषयन्ति તેઓને સુકવી નાખે છે उनको सुखा देते हैं, तन्नाशात् ત્યારે તેઓના નાશથી तब उनके नाशसे, रेतः अपि શુક્ર પણ शुक्र भी, आशु શીઘ્ર शीघ्र, उपहन्यते નષ્ટ થાય છે नष्ट होता है, तत्र ત્યારે तब, संपूर्णसर्वाङ्गः સર્વાંગ સંપૂર્ણ છતાં सर्वांग संपूर्ण होने पर भी, सः पुमान् તે પુરુષ वह पुरुष, अपुमान् નપુંસક नपुंसक, भवति થાય છે होता है, सन्निपात- સન્નિપાતના सन्निपातके, समुच्छ्रयात् કોપને લીધે कोपके कारण, एते तु ઉત્પન્ન થયેલા આ નપુંસકોને उत्पन्न हुए ये नपुंसकों, असाध्याः અસાધ્ય असाध्य, व्याख्याताः કહ્યા છે कहे हैं ॥ १८९-१९०½॥

189-190½. As a result of germo-spermic morbidity inherited from the parents or of the sins of past life, the morbid humors entering the seminal vessels during the embryonic life, cause the atrophy of the genital organs. Owing to this atrophy, the function of semen-formation is lost. In such condition the person, though having full physical development, becomes an emasculated man (androgynoid condition). Of the varieties of impotency described above, those caused by tridiscordance of humors are regarded incurable.

क्लैब्यचिकित्सा—

**चिकित्सितमतस्तूर्ध्वं समासव्यासतः शृणु ॥१९१॥**
**शुक्रदोषेषु निर्दिष्टं भेषजं यन्मयाऽनघ !**
**क्लैब्योपशान्तये कुर्यात् क्षीणक्षतहितं च यत् ॥१९२॥**

अतः ऊर्ध्वम् હવે પછી इसके बाद, समासव्यासतः સંક્ષેપમાં અને વિસ્તારથી संक्षेपमें और विस्तारसे, चिकित्सितम् ચિકિત્સા चिकित्सा, शृणु સાંભળો सुनो, अनघ હે નિષ્પાપ! हे अनघ! शुक्रदोषेषु શુક્રદોષોમાં शुक्रदोषोंमें, यत् भेषजम् જે ઔષધ जो औषध, मया મેં मैंने, निर्दिष्टम् બતાવ્યું છે बतलायी है, क्षीणक्षतहितम् च તથા ક્ષીણ અને ક્ષતને માટે હિતકર तथा क्षीणक्षतके लिए हितकर, यत् જે ઔષધ છે તે जो औषध है वह, क्लैब्य- નપુંસકતાની नपुंसकताकी, उपशान्तये શાન્તિ માટે शान्तिके लिए, कुर्यात् કરવું જોઈએ करनी चाहिए ॥१९१-१९२॥

191-192. Henceforth will be described the treatment of impotency in brief and in extenso. Now listen, O, sinless one! the medications indicated by me in the morbid condition of semen, cachexia and pectoral lesions are regarded beneficial in impotency.

**बस्तयः क्षीरसर्पींषि वृष्ययोगाश्च ये मताः ।**
**रसायनप्रयोगाश्च सर्वानेतान् प्रयोजयेत् ॥१९३॥**
**समीक्ष्य देहदोषाग्निबलं भेषजकालवित् ।**
**व्यवायहेतुजे क्लैब्ये तथा धातुविपर्ययात् ॥१९४॥**

भेषजकालवित् ઔષધ અને કાળને જાણનાર વૈદ્ય औषध और कालको जाननेवाला वैद्य, देह- દેહ देह, दोष- દોષ दोष, अग्निबलम् તથા અગ્નિબળને तथा अग्निबलको, समीक्ष्य બરાબર જાણીને भली भाँति जानकर, बस्तयः બસ્તિઓ बस्तियाँ, क्षीरसर्पींषि દૂધ, ઘી दूध,

१९३. ये मताः—शास्त्रवित (थ.)
१९४ व्यवायहेतुजे—वैचित्र्यहेतुजे (व.)
,, तथा धातुविपर्ययात—कुर्याद् हेतुविपर्ययात (व.)
,, ,, —भेषजं धातुवर्धनम् (ध.)

घी, ये वृष्ययोगाः च અને જે વૃષ્યયોગો और जो वृष्य-योग, रसायनप्रयोगाः च तथा રસાયનપ્રયોગો तथा रसायनप्रयोग, मताः માનેલા છે माने हुए हैं, तथा તથા तथा, व्यवायहेतुजे મૈથુનથી થયેલી मैथुनसे उत्पन्न, धातुविपर्ययात् तथा ધાતુઓના વૈષમ્યથી થયેલી तथा धातुओंके वैषम्यसे उत्पन्न हुई, क्लैब्ये નપુંસકતામાં नपुंसकतामें, एतान् सर्वान् આ સઘળાંનો इन सबका, प्रयोजयेत् પ્રયોગ કરવો प्रयोग करे ॥ १९३-१९४ ॥

193-194. The physician, versed in the knowledge of the proper time of each therapeutic measure, should make use of enemata, milk and ghee and what ever are considered virilific medications and vitalizers, having diagnosed the strength of the body, the morbid humors and the gastric fire in the impotency caused by sexual indulgence as well as in that caused by the vitiation of body-elements.

दैवव्यपाश्रयं चैव भेषजं चाभिचारजे ।
समासेनैतदुद्दिष्टं भेषजं क्लैब्यशान्तये ॥१९५॥

अभिचारजे અભિચારજન્ય નપુંસકતામાં अभिचार-जन्य क्लीवतामें, दैवव्यपाश्रयम् દૈવવ્યપાશ્રય दैव-व्यपाश्रय, च एव तथा દોષવ્યપાશ્રય तथा दोषव्यपाश्रय, भेषजम् ચિકિત્સા કરવી चिकित्सा करे, एतत् એ यह, क्लैब्यशान्तये નપુંસકતાની શાંતિ માટે नपुंसकताकी शान्तिके लिए, समासेन સંક્ષેપમાં संक्षेपमें, भेषजम् ચિકિત્સા चिकित्सा, उद्दिष्टा બતાવી છે बतलाई है ॥ १९५ ॥

195. Where the impotency is caused by black magic, resort must be had to divine medication (through prayer and worship). Thus has been described in brief the treatment of impotency.

विस्तरेण प्रवक्ष्यामि क्लैब्यानां भेषजं पुनः ।
सुस्विन्नस्निग्धगात्रस्य स्नेहयुक्तं विरेचनम् ॥१९६॥
अन्नाशनं ततः कुर्यादथवाऽऽस्थापनं पुनः ।
प्रदद्यान्मतिमान् वैद्यस्ततस्तमनुवासयेत् ॥१९७॥
पलाशैरण्डमुस्ताद्यैः पश्चादास्थापयेत्ततः ।

पुनः ફરીને फिरसे, क्लैब्यानाम् નપુંસકતાઓની नपुंसकताओंकी, भेषजम् ચિકિત્સા चिकित्सा, विस्तरेण વિસ્તારપૂર્વક विस्तारसे, प्रवक्ष्यामि કહીશ कहूँगा, सुस्विन्न स्निग्ध- गात्रस्य શરીરનું સારી રીતે સ્નેહન તથા સ્વેદન કરી शरीरका भलीभांति स्नेहन तथा स्वेदन करके, स्नेहयुक्तम् સ્નેહયુક્ત स्नेहयुक्त, विरेचनम् વિરેચન આપવું विरेचन देवे, ततः તે પછી उसके बाद. अन्नाशनम् અન્નભોજન अन्नभोजन, कुर्यात् કરે करे, अथवा पुनः અથવા તો अथवा तो, आस्थापनम् આસ્થાપન आस्थापन, प्रदद्यात् આપવું देवे, ततः ત્યાર પછી उसके बाद, मतिमान् બુદ્ધિમાન बुद्धमान, वैद्यः વૈદ્ય वैद्य, तम् તેને उसे, अनुवासयेत् અનુવાસન આપવું अनुवासन देवे, ततः पश्चात् તે પછી उसके बाद, पलाश- પલાશ ढाक, एरण्ड- એરંડ एरण्ड, मुस्ताद्यैः અને મુસ્તાદિથી और मुस्तादिसे, आस्थापयेत् આસ્થાપન દેવું आस्थापन देवे ॥ १९६-१९७½ ॥

196-197½. I shall describe again, at length, the treatment of various kinds of impotency. The patient should be given unctuous purgative after oleation and sudation procedures. He must then be given food or corrective enema, after which the wise physician should give him an unctuous enema. He should again be given a corrective enema of palas, castor and nut grass.

वाजीकरणयोगाश्च पूर्वं ये समुदाहृताः ॥१९८॥
भिषजा ते प्रयोज्याः स्युः क्लैब्ये बीजोपघातजे ।

पूर्वम् પહેલાં पहले, ये જે जो, वाजीकरणयोगाः વાજીકરણયોગો वाजीकरणयोग, समुदाहृताः કહેલા છે

195. चैव भेषजं चाभिचारजे—तत्र भेषजं संप्रयोजयेत् (च.)

कहे गये हैं, ते તેઓને उन्हें, भिषजा वैद्ये वैद्यको, बीजोपघातजे બીજોપઘાતજ बीजोपघातजन्य, क्लैब्ये નપુંસકતામાં नपुंसकतामें, प्रयोज्याः स्युः પ્રયોજવા જોઈએ प्रयुक्त करे ॥ १९८½ ॥

198-198½. Virilific medications, that have been already described should be given to him by the physician in the condition of impotency due to seminal morbidity.

**ध्वजभङ्गकृतं क्लैब्यं ज्ञात्वा तस्याचरेत् क्रियाम् १९९**
**प्रदेहान् परिषेकांश्च कुर्याद्वा रक्तमोक्षणम् ।**
**स्नेहपानं च कुर्वीत सस्नेहं च विरेचनम् ॥२००॥**
**अनुवासं ततः कुर्यादथवाऽऽस्थापनं पुनः ।**
**व्रणवच्च क्रियाः सर्वास्तत्र कुर्याद्विचक्षणः ॥२०१॥**

ध्वजभङ्गकृतम् ધ્વજભંગજન્ય ध्वजभंगजन्य, क्लैब्यम् નપુંસકતાને नपुंसकताको, ज्ञात्वा જાણીને जानकर, तस्य તેની उसकी, क्रियाम् ચિકિત્સા चिकित्सा, आचरेत् કરવી જોઈએ करनी चाहिए, प्रदेहान् પ્રદેહો प्रदेह, परिषेकान् પરિષેક परिषेक, रक्तमोक्षणम् वा અથવા રક્તમોક્ષણ अथवा रक्तमोक्षण, कुर्यात् કરવું જોઈએ करना चाहिए, स्नेहपानम् च તથા સ્નેહપાન तथा स्नेहपान, सस्नेहम् विरेचनम् च અને સ્નેહસહિત વિરેચન और स्नेहयुक्त विरेचन, कुर्वीत કરવું જોઈએ करना चाहिए, ततः ત્યાર બાદ उसके बाद, अनुवासनम् અનુવાસન अनुवासन, अथवा पुनः અથવા अथवा, आस्थापनम् આસ્થાપન आस्थापन, कुर्यात् કરવું करे, विचक्षणः વિચક્ષણ વૈદ્ય विचक्षण वैद्यको, तत्र તેમાં उसमें, सर्वाः બધી सब, व्रणवत् વ્રણ જેવી व्रणकीसी, क्रियाः ચિકિત્સા चिकित्सा, कुर्यात् કરવી જોઈએ करनी चाहिए ॥ १९९-२०१ ॥

199-201. If impotency is due to the loss of erectile power or phallic disorders, it should be treated in the following manner. The prescribed applications, affusions or depletion of blood should be done; unctuous potion and unctuous purgation should be given followed by an unctuous or corrective enema. Thereafter, the intelligent physician should carry out the line of treatment indicated in wounds.

**जरासंभवजे क्लैब्ये क्षयजे चैव कारयेत् ।**
**स्नेहस्वेदोपपन्नस्य सस्नेहं शोधनं हितम् ॥२०२॥**

जरासंभवजे જરાજન્ય जराजन्य, क्षयजे चैव તથા ક્ષયજન્ય તથા क्षयजन्य, क्लैब्ये નપુંસકતામાં नपुंसकतामें, स्नेह-स्वेद- સ્નેહન, સ્વેદન स्नेहन, स्वेदन, उपपन्नस्य કરાવીને कराके, सस्नेहम् સ્નેહયુક્ત स्नेहयुक्त, हितम् शोधनम् હિતકારક શોધન हितकारक शोधन, कारयेत् કરાવવું करावे ॥ २०२ ॥

202 In geratic impotency and impotency due to wasting the patient should be purified by means of unctuous measures after he has undergone oleation and sudation procedures

**क्षीरसर्पिर्वृष्ययोगा बस्तयश्चैव यापनाः ।**
**रसायनप्रयोगाश्च तयोर्भेषजमुच्यते ॥२०३॥**
**विस्तरेणैतदुद्दिष्टं क्लैब्यानां भेषजं मया ।**

क्षीरसर्पिः ક્ષીરઘૃત क्षीरघृत, वृष्ययोगाः વૃષ્યયોગો वृष्ययोग, यापनाः चैव અને યાપન और यापन, बस्तयः બસ્તિઓ बस्तियाँ, रसायनप्रयोगाः च તથા રસાયનપ્રયોગોને तथा रसायनप्रयोगोंको, तयोः તે બે નપુંસકતાનું उन दोनों नपुंसकताओंकी, भेषजम् ઔષધ औषध, उच्यते કહેવામાં આવે છે कही है, एतत् આ यह, मया મેં मैंने, विस्तरेण વિસ્તારથી विस्तारसे, क्लैब्यानाम् નપુંસકતાઓની नपुंसकताओंकी, भेषजम् ચિકિત્સા चिकित्सा, उद्दिष्टम् બતાવી છે बतलाई है ॥ २०३½ ॥

२०१. अनुवासं–अन्वासनं (ध. क.)

203-203½. His further treatment consists of the administration of milk, ghee, virilific medications, Yapana enemata and the use of vitalizing elixirs. Thus has been elaborately described by me the treatment of impotency.

प्रदरस्य निदानं संप्राप्तिश्च—

**यः पूर्वमुक्तः प्रदरः शृणु हेत्वादिभिस्तु तम् ॥२०४॥**

पूर्वम् પહેલાં पहले, यः જે जो, प्रदरः પ્રદરરોગ प्रदररोग, उक्तः કહ્યો છે कहा है, तम् તેને उसे, हेत्वादिभिः હેતુઆદિથી हेतुआदिसे, शृणु સાંભળો सुनो ॥ २०४ ॥

204. Now listen to the description of the etiology etc., of colporrhea which has been previously mentioned.

**याऽत्यर्थं सेवते नारी लवणाम्लगुरूणि च ।**
**कटून्यथ विदाहीनि स्निग्धानि पिशितानि च ॥२०५॥**
**ग्राम्यौदकानि मेद्यानि कृशरां पायसं दधि ।**
**शुक्तमस्तुसुरादीनि भजन्त्याः कुपितोऽनिलः २०६**
**रक्तं प्रमाणमुत्क्रम्य गर्भाशयगताः सिराः ।**
**रजोवहाः समाश्रित्य रक्तमादाय तद्रजः ॥२०७॥**
**यस्माद्विवर्धयत्याशु रसभावाद्विमानता ।**
**तस्मादसृग्दरं प्राहुरेतत्तन्त्रविशारदाः ॥२०८॥**
**रजः प्रदीर्यते यस्मात् प्रदरस्तेन स स्मृतः ।**
**सामान्यतः समुद्दिष्टं कारणं लिङ्गमेव च ॥२०९॥**

या नारी જે સ્ત્રી जो स्त्री, लवण- લવણ लवण, अम्ल- અમ્લ अम्ल, गुरूणि च અને ગુરુ और गुरु, कटूनि કટુ कटु, अथ विदाहीनि વિદાહી विदाही, स्निग्धानि તથા સ્નિગ્ધ तथा स्निग्ध, पिशितानि માંસોનું मांसोंको, अत्यर्थम् અતિ સેવન કરે છે अति सेवन करती है, ग्राम्य- વળી જે સ્ત્રી ગ્રામ્ય पुनः जो स्त्री ग्राम्य, औदकानि તેમજ જળચરોનાં एवं जलचरोंके, मेद्यानि મેદ્ય માંસ मेद्य मांस, कृशराम् કૃશરા कृशरा, पायसम् પાયસ पायस, दधि દહીં दही, शुक्त- શુક્ત शुक्त, मस्तु- મસ્તુ मस्तु, सुरादीनि અને સુરા વગેરેનું और सुरा आदियोंका, भजन्त्याः સેવન કરે છે તેનો सेवन करती है उसका, कुपितः કોપેલો कुपित हुआ, अनिलः વાયુ वायु, रक्तम् રક્તને रक्तको, प्रमाणम् પ્રમાણથી प्रमाणसे, उत्क्रम्य વધારી बढ़ाकर, गर्भाशयगताः ગર્ભાશયમાં રહેલી गर्भाशयस्थित, रजोवहाः રજોવહા रजोवह, सिराः સિરાઓને सिराओंको, समाश्रित्य આશ્રય કરી आश्रय करके, रक्तम् રક્તને रक्तको, आदाय લઈને लेकर, तद्रजः તે આર્તવને उस आर्तवको, आशु જલદી शीघ्र, विवर्धयति વધારી દે છે बढ़ा देता है, यस्मात् જેથી जिससे, रसभावात् રસભાવ (દ્રવપણું)ને લીધે रसभावके कारण, विमानता રક્તના પ્રમાણમાં વધારો रक्तके प्रमाणमें वृद्धि, भवति થાય છે होती है, तस्मात् તેથી इससे, एतत् એને इसे, तन्त्रविशारदाः શાસ્ત્રવિશારદો शास्त्रविशारद, असृग्दरम् અસૃગ્દર असृग्दर, प्राहुः કહે છે कहते हैं, यस्मात् જેથી जिस कारणसे, रजः આર્તવ आर्तव, प्रदीर्यते વિસ્તારવાળું થાય છે विस्तारवाला होता है, तेन તેથી इस लिए, सः તેને उसे, प्रदरः પ્રદર प्रदर, स्मृतः કહેલ છે कहा है, सामान्यतः પ્રદરનાં આ સામાન્ય प्रदरके ये सामान्य, कारणम् કારણ कारण, लिङ्गम् च एव તથા લક્ષણ तथा लक्षण, समुद्दिष्टम् કહ્યાં છે कह दिये हैं ॥ २०५-२०९ ॥

205-209. In a woman who is habituated to excess of salt acid, heavy, pungent irritant and unctuous articles and to the flesh of domestic, aquatic and fatty creatures, or to kedgeree, milk pudding, curds, vinegar, whey, sura wine, and such other articles, the vata, getting provoked, increases the quantity of blood in the body and gets

---

२०६. दधि—गुडम् (च. क.)

२०७ रक्तं....तद्रजः ॥
२०८. यस्माद्....विशारदाः ॥ { रक्तं प्रमाणादधिकं पूर्वं च कुपितोऽनिलः । रजोवहाः समाश्रित्य वर्धयत्याशु तद्रजः ॥ तस्मादसृग्दरं प्राहुरेतत्तन्त्रविशारदाः । (च. क.)

रसभावाद्विमानता—रक्तमिवं समावृतम् (ग. ब. च.)

lodged in the vessels that go to the uterus conveying the menstrual fluid; it leads the blood to that region. As it increases the menstrual fluid in quantity by its fluidity, it is called the blood-flow by the gynecologist. As the menstrual blood breaks its way from this sur-charge, it is called Pradara or colporrhea (rhea—to flow). Thus has been described, in general, the etiology and the signs and symptoms.

**चतुर्विधं व्यासतस्तु वाताद्यैः सन्निपाततः ।**

व्यासतः तु અને વિસ્તારથી તો और विस्तारसे तो, वाताद्यैः અર્થાત્ વાતાદિ દોષોથી अर्थात् वातादिसे, सन्निपाततः તથા સન્નિપાતથી तथा सन्निपातसे, चतुर्विधम् પ્રદર ચાર પ્રકારનું છે प्रदर चार प्रकारका है ॥२०९½॥

209½. There are four kinds of colporrhea caused by each of the three humors individually as well as the one caused by the tridiscordance of humors.

वातप्रदरस्य निदानलक्षणे—

**अतः परं प्रवक्ष्यामि हेत्वाकृतिभिषग्जितम् ॥२१०॥**
**रूक्षादिभिर्मारुतस्तु रक्तमादाय पूर्ववत् ।**
**कुपितः प्रदरं कुर्याल्लक्षणं तस्य मे शृणु ॥२११॥**

अतः परम् હવે પછી इसके बाद, हेतु- આ પ્રદરોના કારણ इन प्रदरोंके कारण, आकृति- લક્ષણ लक्षण, भिषग्जितम् અને ચિકિત્સા और चिकित्सा, प्रवक्ष्यामि કહીશ कहूंगा, रूक्षादिभिः રૂક્ષાદિથી रूक्षादिसे, कुपितः કોપેલો कुपित हुआ, मारुतः વાયુ वायु, पूर्ववत् આગળ કહ્યા મુજબ पूर्व कथनके अनुसार, रक्तम् રક્તને रक्तको, आदाय ગ્રહણ કરીને ग्रहण करके, प्रदरम् પ્રદર प्रदरको, कुर्यात् કરે છે करता है, तस्य તેનું इसका, लक्षणम् લક્ષણ लक्षण, मे મારી પાસેથી मुझसे, शृणु સાંભળો सुनो ॥२१०-२११॥

210-211. Hereafter, I shall describe their causes and symptoms and treatment The vata, provoked by dry articles etc., bringing blood as described already, causes colporrhea. Now listen to its signs and symptoms, as I describe them.

**फेनिलं तनु रूक्षं च श्यावं चारुणमेव च ।**
**किंशुकोदकसङ्काशं सरुजं वाऽथ नीरुजम् ॥२१२॥**
**कटिवङ्क्षणहृत्पार्श्वपृष्ठश्रोणिषु मारुतः ।**
**कुरुते वेदनां तीव्रामेतद्वातात्मकं विदुः ॥२१३॥**

फेनिलम् ફીણવાળું झागदार, तनु પાતળું पतला, रूक्षम् च રૂક્ષ रूक्ष श्यावम् શ્યાવ श्याव, अरुणम् અરુણ अरुण, किंशुकोदक- કેસુડાંના પાણી ढाकके फूलोंके जलके, सङ्काशम् જેવું सदृश, सरुजम् तथा દરદ સાથે तथा दरदके साथ, अथवा અથવા अथवा, नीरुजम् દરદ-રહિત રજ નીકળે છે दरदरहित रज निकलता है, मारुतः અને વાયુ और वायु, कटि- કમર कमर, वंक्षण- વંક્ષણ वंक्षण, हृत- હૃદય हृदय, पार्श्व- પાર્શ્વ पार्श्व, पृष्ठ- પૃષ્ઠ पृष्ठ, श्रोणिषु અને શ્રોણિમાં और श्रोणिमें, तीव्राम् તીવ્ર तीव्र, वेदनाम् વેદના वेदनाको, कुरुते કરે છે करता है, एतत् એને इसको, वातात्मकम् વાતાત્મક वातात्मक, विदुः કહે છે कहते हैं ॥२१२-२१३॥

212-213 The discharge is frothy, thin, unctuous, dusky-red and of the color of the juice of palas flower; and it may be painless or painful. The vata causes acute pain in the waist, groin, cardiac region, sides, back and hips. This is known as colporrhea due to vata.

पित्तप्रदरस्य निदानलक्षणे—

**अम्लोष्णलवणक्षारैः पित्तं प्रकुपितं यदा ।**
**पूर्ववत् प्रदरं कुर्यात् पैत्तिकं लिङ्गतः शृणु ॥२१४॥**

२११. [illegible] तस्य मे शृणु—लिङ्गं [illegible] (च.)

अम्ल- અમ્લ अम्ल, उष्ण- ઉષ્ણ उष्ण, लवण- લવણ लवण, क्षारैः અને ક્ષારથી और क्षारसे, पित्तम् પિત્ત पित्त, यदा જ્યારે जब, प्रकुपितम् પ્રકોપ પામે છે ત્યારે प्रकुपित होता है तब, पूर्ववत् પહેલાં કહ્યા મુજબ पूर्वकथनके अनुसार, प्रदरम् પ્રદરને प्रदरको, कुर्यात् કરે છે करता है, पैत्तिकम् એ પૈત્તિક પ્રદરને इस पैत्तिक प्रदरको, लिङ्गैः લક્ષણથી लक्षणसे, शृणु સાંભળો सुनो ॥ २१४ ॥

214. The pitta, provoked by acid, hot, salt and alkaline articles, causes colporrhea, as already described, of the pitta type. Now listen to its signs and symptoms.

**सनीलमथवा पीतमत्युष्णमसितं तथा ।**
**नितान्तरक्तं स्रवति मुहुर्मुहुरथार्तिमत् ॥२१५॥**
**दाहरागतृषामोहज्वरभ्रमसमायुतम् ।**
**असृग्दरं पैत्तिकं स्यात्**

सनीलम् કંઈક નીલું कुछ नीला, अथवा અથવા अथवा, पीतम् પીળું पीला, अत्युष्णम् અત્યન્ત ગરમ अति उष्ण, असितम् કાળું काला, नितान्त- તથા અત્યન્ત तथा अत्यन्त, रक्तम् લાલ રજ लाल रज, आर्तिमत् પીડા સાથે पीडाके साथ, अथ અને और, मुहुः मुहुः વારંવાર बारबार, स्रवति સ્રવે છે स्रवता है, दाह- દાહ दाह, राग- લાલી लाली, तृषा- તરસ तृषा, मोह- મોહ मोह, ज्वर- જ્વર ज्वर, भ्रम- અને ભ્રમથી और भ्रमसे, समायुतम् યુક્ત युक्त, असृग्दरम् આ પ્રદર यह प्रदर, पैत्तिकम् स्यात् પૈત્તિક કહેવાય છે पैत्तिक कहाता है ॥ २१५¾ ॥

215-215¾. There will be frequent and painful discharge which is bluish or yellowish, very warm, dark or deep red and is accompanied with local burning and redness, thirst, stupefaction, fever and giddiness. This is colporrhea of the pitta type.

कफप्रदरस्य निदानलक्षणे—

**श्लैष्मिकं तु प्रवक्ष्यते ॥२१६॥**
**गुर्वादिभिर्हेतुभिश्च पूर्ववत् कुपितः कफः ।**
**प्रदरं कुरुते तस्य लक्षणं तत्त्वतः शृणु ॥२१७॥**

श्लैष्मिकम् तु હવે કફજ પ્રદર अब कफज प्रदर, प्रवक्ष्यते કહેવામાં આવે છે कहा जाता है, गुर्वादिभिः ગુરુ આદિ गुरु आदि, हेतुभिः હેતુઓ વડે हेतुओंसे, कुपितः કોપેલો कुपित, कफः કફ कफ, पूर्ववत् પહેલાં કહ્યા મુજબ पूर्वकथनके अनुसार, प्रदरम् પ્રદર प्रदरको, कुरुते કરે છે करता है, तस्य તેનું उसका, लक्षणम् લક્ષણ लक्षण, तत्त्वतः તત્ત્વથી तत्त्वसे, शृणु સાંભળો सुनो ॥ २१६-२१७ ॥

216-217. Now will be described colporrhea of the kapha type. The kapha, provoked by etiological factors such as heavy articles of diet etc., causes colporrhea of the kapha type. Now listen to its main characteristics.

**पिच्छिलं पाण्डुवर्णं च गुरु स्निग्धं च शीतलम् ।**
**स्रवत्यसृक् श्लेष्मलं च घनं मन्दरुजाकरम् ॥२१८॥**
**छर्द्यरोचकहृल्लासश्वासकाससमन्वितम् ।**

पिच्छिलम् પિચ્છિલ पिच्छिल, पाण्डुवर्णम् च પાણ્ડુરંગનું पाण्डुरंगका, गुरु ગુરુ गुरु, स्निग्धम् સ્નિગ્ધ स्निग्ध, शीतलम् च શીતલ शीतल, श्लेष्मलम् કફયુક્ત कफयुक्त, घनम् ગાઢું गाढा, मन्दरुजाकरम् च અને મંદ પીડા કરનારું और मन्द पीड़ाकारक, असृक् રક્ત रक्त, स्रवति વહે છે स्रवता है, छर्दि- અને તે છર્દિ और छर्दि, अरोचक- અરુચિ अरुचि, हृल्लास- હલ્લાસ हल्लास, श्वास- શ્વાસ श्वास, कास અને ઉધરસથી और खांसीसे, समन्वितम् યુક્ત હોય છે युक्त होता है ॥ २१८½ ॥

२१६. दाहरागतृषामोह—विदाहरागतृणमोह (ब.)
,, स्यात्—तत् (ब.)

२१८. शीतलम्—यद् घनम् (ब.)
,, घनं—तथा (ख. झ. ड. त. ब.)

218-218½. The discharge is slimy, yellowish, white in color, heavy, unctuous, cold, muco-sanguinous, dense and accompanied with mild pain. It is attended with vomiting, anorexia, nausea, dyspnea and cough.

साब्निपातिकप्रदरस्य निदानलक्षणे—

**(वक्ष्यते क्षीरदोषाणां सामान्यमिह कारणम् २१९**
**यत्तदेव त्रिदोषस्य कारणं प्रदरस्य तु।)**
**त्रिलिङ्गसंयुतं विद्यान्नैकावस्थमसृग्दरम् ॥२२०॥**

इह આ અધ્યાયમાં इस अध्यायमें, क्षीरदोषाणाम् ક્ષીરદોષોનું क्षीरदोषोंका, यत् જે जो, सामान्यम् સામાન્ય सामान्य, कारणम् કારણ कारण, वक्ष्यते કહેવાશે कहा जायगा, तत् एव તે જ वही, त्रिदोषस्य ત્રિદોષના त्रिदोषके, प्रदरस्य પ્રદરનું प्रदरका, कारणम् કારણ છે कारण है, न एकावस्थम् જુદી જુદી અવસ્થાઓવાળું भिन्न भिन्न अवस्थाओंवाले, असृग्दरम् આ પ્રદરને इस प्रदरको, त्रिलिङ्गसंयुतम् ત્રણ દોષોના લક્ષણોયુક્ત तीनों दोषोंके लक्षणोंसे युक्त, विद्यात् જાણવું जानना चाहिए ॥ २१९-२२० ॥

219-220. What will be described as the general causes of the morbidity of the mother's milk are also to be considered the causative factors of colporrhea of the tridiscordance type. In colporrhea of the tridiscordance type, where all the above symptoms are combined, the disease will be characterised by various conditions.

**नारी त्वतिपरिक्लिष्टा यदा प्रक्षीणशोणिता।**
**सर्वहेतुसमाचारादतिवृद्धस्तदाऽनिलः ॥२२१॥**
**रक्तमार्गेण सृजति प्रत्यनीकबलं कफम्।**
**दुर्गन्धं पिच्छिलं पीतं विदग्धं पित्ततेजसा ॥२२२॥**
**वसां मेदश्च यावद्धि समुपादाय वेगवान्।**
**सृजत्यपत्यमार्गेण सर्पिर्मज्जवसोपमम् ॥२२३॥**
**शश्वत् स्रवत्यथास्रावं तृष्णादाहज्वरान्विताम्।**
**क्षीणरक्तां दुर्बलां च तामसाध्यां विवर्जयेत् ॥२२४॥**

अति- અત્યંત अत्यन्त, परिक्लिष्टा કષ્ટયુક્ત कष्टयुक्त, प्रक्षीणशोणिता અને ક્ષીણ રક્તવાળી और क्षीण रक्तयुक्त, नारी तु સ્ત્રી स्त्री, यदा જ્યારે जब, सर्वहेतु- સઘળા હેતુઓનું सब हेतुओंका, समाचारात् સેવન કરે છે ત્યારે सेवन करती है तब, अतिवृद्धः બહુજ વધેલો अत्यन्त बढ़ा हुआ, अनिलः વાયુ वायु, प्रत्यनीकबलम् હીન બળવાળા हीन बलयुक्त, पित्ततेजसा પિત્તના તેજથી पित्तके तेजसे, विदग्धम् વિદગ્ધ विदग्ध, पीतम् પીળા पीले, दुर्गन्धम् દુર્ગન્ધી दुर्गन्धी, पिच्छिलम् અને પિચ્છિલ और पिच्छिल, कफम् કફને कफको, रक्तमार्गेण રજોમાર્ગે रजोमार्गसे, सृजति બહાર કાઢે છે बाहर निकालता है, यावत् हि અને જ્યારે और जब, वेगवान् વેગવાન વાયુ वेगवान वायु, वसाम् વસા वसा, मेदः च અને મેદને और मेदको, समुपादाय લઈને लेकर, अपत्यमार्गेण યોનિમાર્ગથી योनिमार्गसे, सृजति બહાર કાઢે છે बाहर निकालता है, अथ ત્યારે तब, शश्वत् નિરંતર निरन्तर, सर्पिः- ઘી घी, मज्ज- મજ્જા मजा, वसोपमम् અને વસા જેવા और वसाके समान, आस्रावम् આસ્રાવને आस्रावको, स्रवति યોનિદ્વારા બહાર કાઢે છે योनिद्वारा बाहर निकालता है, तृष्णा- તરસ प्यास, दाह- દાહ दाह, ज्वरान्विताम् તથા જ્વરથી યુક્ત तथा ज्वरसे युक्त, क्षीणरक्ताम् ક્ષીણરક્તવાળી क्षीणरक्त, दुर्बलाम् અને દુર્બળ और दुर्बल, ताम् તે સ્ત્રીને उस स्त्रीको, असाध्याम् અસાધ્ય માની असाध्य मानकर, सः તે વૈદ્ય वह वैद्य, विवर्जयेत् છોડી દેવી छोड़ दे ॥ २२१-२२४ ॥

221-224. If a woman, very much exhausted or greatly wasted in blood, indulges in things which are causative factors of this disease, the vata, getting excessively increased and passing

२२२. प्रत्यनीकबलं-प्रत्यनीककरं (ब.)
" " -प्रत्यनीकगुणं (च. क.)

२२४. स्रवत्यथास्रावं-स्रवन्तीमास्रावं (ध.)
" तामसाध्यां विवर्जयेत्-तामसेव्यां विनिर्दिशेत् (ध.)

through the blood-channels, causes the opposing kapha to be burnt by the heat of pitta and converts it into a slimy offensive and yellowish fluid; and mixing with fat and the adipose tissue, it flows out forcibly through the vagina and this discharge is of the color of ghee or marrow or fat. This is a continual discharge accompanied with thirst, burning and fever. The woman, wasted of blood and rendered weak as a result should be considered incurable.

शुद्धार्तवलक्षणम्—

**मासान्निष्पिच्छदाहार्ति पञ्चरात्रानुबन्धि च ।**
**नैवातिबहु नात्यल्पमार्तवं शुद्धमादिशेत् ॥२२५॥**

मासात् માસે માસે प्रतिमास, निष्पिच्छदाहार्ति પિચ્છા, દાહ અને પીડારહિત पिच्छा, दाह और पीड़ारहित, पञ्चरात्र- પાંચ રાત્રિ પર્યંત पञ्चरात्रि तक, अनुबन्धि ચાલુ રહેતા जारी रहनेवाले, न एव ન તો न तो, अति बहु બહુ વધારે अति अधिक, नात्यल्पम् च અને ન તો બહુ થોડા और न तो बहुत थोड़े, आर्तवम् આર્તવને आर्तवको, शुद्धम् શુદ્ધ शुद्ध, आदिशेत् જાણવું जानना चाहिए ॥ २२५ ॥

225. That should be regarded healthy or normal menses which occurs every month, which is not slimy, which is not attended with burning or pain, which lasts for five days and which is neither excessive nor very scanty.

**गुञ्जाफलसवर्णं च पद्मालक्तकसन्निभम् ।**
**इन्द्रगोपकसङ्काशमार्तवं शुद्धमादिशेत् ॥२२६॥**

गुञ्जाफल- ચણોઠીના गुञ्जाफलके, सवर्णम् જેવા રંગના सदृश वर्णवाले, पद्म- કમળ कमल, अलक्तक- તથા અળતાના और अलतेके, सन्निभम् જેવા सदृश, इन्द्रगोपक અને ઇંદ્રગોપના और वीरबहुटीके, सङ्काशम् च જેવા सदृश, आर्तवम् આર્તવને आर्तवको, शुद्धम् શુદ્ધ शुद्ध, आदिशेत् કહેવું कहना चाहिए ॥ २२६ ॥

226. That should be regarded as the healthy or normal menstrual blood which is of the color of the jequirity-seed or of the lotus or of lac or which resembles the trombidium, the scarlet insect.

प्रदरचिकित्सा—

**योनीनां वातलाद्यानां यदुक्तमिह भेषजम् ।**
**चतुर्णां प्रदराणां च तत् सर्वं कारयेद्भिषक् ॥२२७॥**

इह આ અધ્યાયમાં इस अध्यायमें, वातलाद्यानाम् વાતલ આદિ वातल आदि, योनीनाम् યોનિઓનું योनियोंका, यत् भेषजम् જે ઔષધ जो औषध, उक्तम् કહેલું છે कहा गया है, तत् सर्वम् તે બધું उन सबका, भिषक् વૈદ્યે वैद्यको, चतुर्णाम् प्रदराणाम् च ચારે પ્રદરોમાં પણ चारों प्रदरोंमें भी, कारयेत् કરવું જોઈએ प्रयोग करना चाहिए ॥ २२७ ॥

227 The physician should use all medications indicated in gynecic disorders caused by vata andother humors, in these four kinds of colporrhea.

**रक्तातिसारिणां यच्च तथा शोणितपित्तिनाम् ।**
**रक्तार्शसां च यत् प्रोक्तं भेषजं तच्च कारयेत् ॥२२८॥**

यत् જે जो, रक्तातिसारिणाम् રક્તાતિસારીઓનું रक्तातिसारियोंकी, तथा તથા तथा, शोणितपित्तिनाम् રક્તપિત્તવાળાનું रक्तपित्तवालोंकी, यत् च અને જે और जो रक्तार्शसाम् રક્તાર્શવાળાનું रक्तार्शवालोंकी, भेषजम् ઔષધ औषध, प्रोक्तम् કહેલું છે कही है, तत् च તેને પણ उसे भी, कारयेत् કરવું જોઈએ करनी चाहिए ॥ २२८ ॥

२२६. पद्मालक्तक-पद्मालक्तक (ग. च. फ.)

२२७. योनीनां वातलाद्यानां—वाताद्यानां च योनीनाम् (च.)

228. He should also use the remedies indicated in diarrhea with bloody stools, in hemothermia and bleeding piles.

क्षीरदोषाणां निदानं संप्राप्तिश्च—

**धात्रीस्तनस्तन्यसंपदुक्ता विस्तरतः पुरा ।**
**स्तन्यसंजननं चैव स्तन्यस्य च विशोधनम् ॥२२९॥**

धात्री- ધાવ धात्री, स्तन- સ્તન स्तनों, स्तन्य- અને ધાવણની और स्तन्यकी, संपत् સમ્પત્તિ सम्पत्ति, पुरा પહેલાં पहले, विस्तरतः વિસ્તારથી विस्तारसे, उक्ता કહી છે कह दी है, स्तन्यसंजननम् च एव સ્તન્યજનન स्तन्यजनन, स्तन्यस्य સ્તન્યનું और स्तन्यका, विशोधनम् च વિશોધન પણ તેજ પ્રમાણે કહ્યું છે विशोधन भी उसी प्रकार कह दिये हैं ॥ २२९ ॥

229. The qualities of the wellformed breasts and the breast-milk of the wet nurse have been already described by me in detail. So too have been described the galactogogues and the galacto-depurants;

**वातादिदुष्टे लिङ्गं च क्षीणस्य च चिकित्सितम् ।**
**तत्सर्वमुक्तं ये त्वष्टौ क्षीरदोषाः प्रकीर्तिताः ॥२३०॥**
**वातादिष्वेव तान् विद्याच्छास्त्रचक्षुर्भिषक्तमः ।**
**त्रिविधास्तु यतः शिष्यास्ततो वक्ष्यामि विस्तरम् ॥**

वातादिदुष्टे વાતાદિથી દૂષિત દૂધનાં वातादिसे दूषित दूधके, लिङ्गम् લક્ષણ लक्षण, क्षीणस्य च અને ક્ષીણ દૂધની और क्षीण दूधकी चिकित्सितम् ચિકિત્સા चिकित्सा, तत् सर्वम् તે બધું यह सब, उक्तम् કહ્યું છે कह दिया है, ये तु અને જે और जो, अष्टौ આઠ आठ, क्षीरदोषाः ક્ષીરદોષો क्षीरदोष, प्रकीर्तिताः કહેલા છે कहे हैं, तान् તેઓને उनको, शास्त्रचक्षुः શાસ્ત્રજ્ઞ शास्त्रज्ञ, भिषक्तमः શ્રેષ્ઠ વૈદ્ય श्रेष्ठ वैद्य, वातादिषु एव વાતાદિઓમાં જ वातादिदोषोंमें ही, विद्यात् જાણવા जाने, यतः જેથી यतः, शिष्याः तु શિષ્ય शिष्य, त्रिविधाः ત્રણ પ્રકારના છે तीन प्रकारके हैं, ततः તેથી ततः, विस्तरम् વિસ્તારથી विस्तारसे, वक्ष्यामि કહીશ कहूँगा ॥ २३०-२३१ ॥

230-231. So also the signs of vitiation of the breast-milk by vata and other humors along with its treatment. All this, along with the eight kinds of morbidity of milk, have been described. The able physician endowed with scientific vision should classify these into the categories of vata and other humors. As there are three classes of pupils in view of their grades of intelligence, I describe the subject in detail to be used even to the lowest of them.

**अजीर्णासात्म्यविषमविरुद्धात्यर्थभोजनात् ।**
**लवणाम्लकटुक्षारप्रक्लिन्नानां च सेवनात् ॥२३२॥**
**मनःशरीरसंतापादस्वप्नान्निशि चिन्तनात् ।**
**प्राप्तवेगप्रतीघातादप्राप्तोदीरणेन च ॥२३३॥**
**परमान्नं गुडकृतं कृशरां दधि मन्दकम् ।**
**अभिष्यन्दीनि मांसानि ग्राम्यानूपौदकानि च २३४**
**भुक्त्वा भुक्त्वा दिवास्वप्नान्मद्यस्यातिनिषेवणात् ।**
**अनायासादभीघातात् क्रोधाच्चातङ्ककर्शनैः ॥२३५॥**
**दोषाः क्षीरवहाः प्राप्य सिराः स्तन्यं प्रदूष्य च ।**
**कुर्युरष्टविधं भूयो दोषतस्तन्निबोध मे ॥२३६॥**

अजीर्ण- અજીર્ણ अजीर्ण, असात्म्य- અસાત્મ્ય असात्म्य, विरुद्ध- વિરુદ્ધ विरुद्ध, अत्यर्थ- અને અત્યન્ત और अत्यन्त, भोजनात् ભોજનથી भोजनसे, लवण- લવણ लवण, अम्ल- અમ્લ अम्ल, कटु- કટુ कटु, क्षार- ક્ષાર क्षार, प्रक्लिन्नानाम् च અને કલેદવાળાં દ્રવ્યોના और क्लेदयुक्त द्रव्योंके, सेवनात् સેવનથી सेवनसे, मनः-

२३१. भिषक्तमः—भिषग्वरः (च.)

२३४. मन्दकम्—नवायकम् (ग. च.)
२३५. अनायासादभीघातात् क्रोधाच्चातङ्ककर्शनैः -अभिचारादनायासाद् व्याधिभिः कर्शनेन च (ध. च. क.)
२३६. क्षीरवहाः-क्षीराशयाः (क.)

मन मन, शरीर- અને શરીરના और शरीरके, संतापाच संतापथी सन्तापसे, निशि રાત્રિમાં रात्रिमें, अस्वप्नात् ન ઊંઘવાથી न सोनेसे, चिन्तनात् ચિંતાથી चिन्तासे, प्राप्तवेग- પ્રાપ્ત થએલા વેગોને प्राप्त वेगोंको, प्रतीघाताच રોકવાથી रोकनेसे, अप्राप्त- અને અપ્રાપ્ત વેગોને और अप्राप्त वेगोंको, उदीरणेन च પ્રેરિત કરવાથી प्रेरित करनेसे, परमान्नम् દૂધપાક दूधपाक, गुडकृतम् ગોળની બનાવટો गुड़की बनी हुई चीजें, कृशराम् કૃશરા कृशरा, मन्दकम् दधि મન્દજાત દહીં मन्दजात दधि, अभिष्यन्दीनि અભિષ્યન્દી अभिष्यन्दी, ग्राम्य- तथा ગ્રામ્ય तथा ग्राम्य, आनूप- આનૂપ आनूप, औदकानि च અને જળચરોનાં और जलचरोंके, मांसानि માંસ मांस, भुक्त्वा भुक्त्वा ખાઈ ખાઈને खा खाकर, दिवा-स्वप्नात् દિવસમાં ઊંઘવાથી दिनमें सोनेसे, मद्यस्य अतिनिषेवणात् અતિસેવનથી તેમજ મદ્યના एवं मद्यके अतिसेवनसे, अनायासात् પરિશ્રમ ન કરવાથી परिश्रम न करनेसे, अभीघातात् અભિઘાતથી चोट लगनेसे, क्रोधात् ક્રોધથી क्रोधसे, आतङ्क- અને રોગથી और रोगसे, कर्शनैः च કૃશ થવાથી कृश होनेसे, दोषाः કોપેલા દોષો कुपित दोष, क्षीरवहाः ક્ષીરવાહિની क्षीरवहा, सिराः સિરાઓમાં सिराओंमें, प्राप्य પહોંચીને पहुंचकर, स्तन्यम् ધાવણને स्तन्यको, प्रदूष्य च દૂષિત કરી दूषित करके, अष्टविधम् આઠ પ્રકારનું अष्ट प्रकारका, कुर्युः કરે છે करते हैं, भूयः ફરીને फिरसे, तत् તેને उसे, दोषतः દોષ પ્રમાણે दोषानुसार, मे મારી પાસેથી मुझसे, निबोध સાંભળો सुनो ॥ २३२-२३६ ॥

232-236. By taking predigestion meals, unwholesome, irregular, antagonistic and excessive diet, by constant use of salt, acid, pungent, alkaline and softened articles, by mental and bodily affliction, sleeplessness at night, brooding, suppreassion of the manifested urges and artificially exciting such urges, and by indulgence in daysleep after frequent eating of milk-pudding, products of gur, kedgeree, immaturec urds, liquefacient, flesh of domestic, wet-land and aquatic creatures; by excessive use of wine, lack of exertion, trauma, anger and emaciation due to diseases the humors, getting provoked reach the galactic channels, vitiate the milk and cause eight kinds of galactic morbidity. Now listeu, as I describe them again, according to each category of morbidity.

वातजादिभेदेन क्षीरदोषस्य लिङ्गानि—

**वैरस्यं फेनसङ्घातो रौक्ष्यं चेत्यनिलात्मके ।**
**पित्ताद्वैवर्ण्यदौर्गन्ध्ये स्नेहपैच्छिल्यगौरवम् ॥२३७॥**
**कफाद्भवति**

अनिलात्मके વાતદૂષિત ક્ષીરમાં वातदूषित क्षीरमें, वैरस्यम् વિરસતા विरसता, फेनसङ्घातः ફીણનો જમાવ फेनका संघात, रौक्ष्यम् च इति અને રૂક્ષતા થાય છે और रूक्षता होती है, पित्तात् પિત્તથી દૂષિત ક્ષીરમાં पित्तदूषित क्षीरमें, वैवर्ण्य- વિવર્ણતા विवर्णता, दौर्गन्ध्ये અને દુર્ગન્ધ થાય છે और दुर्गन्ध होती है, कफात् તથા કફદૂષિત ક્ષીરમાં तथा कफदूषित क्षीरमें, स्नेह- સ્નિગ્ધતા स्निग्धता, पैच्छिल्य- ચીકાશ पिच्छिलता, गौरवम् તથા ભારેપણું થાય છે और गुरुता, भवति થાય છે होती है ॥ २३७ ॥

237. In condition of vitiation of vata the milk will be distasteful, frothy and unctuous In vitiation by pitta, there will be discoloration and bad smell. In vitiation by kapha, unctuousness, sliminess and heaviness will be observed.

**रूक्षाद्यैरनिलः स्वैः प्रकोपणैः ।**
**कुद्धः क्षीराशयं प्राप्य रसं स्तन्यस्य दूषयेत् ॥२३८॥**

रूक्षाद्यैः રૂક્ષાદિ रूक्षादि, स्वैः પોતાનાં अपने, प्रकोपणैः પ્રકોપણોથી प्रकोपणोंसे, क्रुद्धः કુપિત कुपित,

२३८. स्तन्यस्य दूषयेत्-स्तन्यं प्रदूषयेत् (ध.)

**अनिलः** વાયુ वायु, **क्षीराशयम्** ક્ષીરાશયમાં क्षीराशयमें, **प्राप्य** જઈને पहुंचकर, **स्तन्यस्य** ધાવણના स्तन्यके, **रसम्** રસને रसको, **दूषयेत्** દૂષિત કરે છે दूषित करती है ॥ २३८ ॥

238. The vata gets provoked by dry articles of diet and other similar vata-provoking factors. Thus, getting provoked and reaching the mammary glands, it vitiates their secretions.

वातादिदुष्टं क्षीरं पिबतो बालस्य यानि लिङ्गानि भवन्ति—

**विरसं वातसंसृष्टं कृशीभवति तत् पिबन् ।**
**न चास्य स्वदते क्षीरं कृच्छ्रेण च विवर्धते ॥२३९॥**

**विरसम्** વિરસ विरस, **वातसंसृष्टम्** અને વાતસંસૃષ્ટ और वातसंसृष्ट, **तत्** તે દૂધ उस दूधको, **पिबन्** પીનાર બાળક पीनेवाला बालक, **कृशीभवति** પાતળો થઈ જાય છે कृश हो जाता है, **अस्य च** તેને उसको, **क्षीरम्** દૂધ दूध, **न स्वदते** ભાવતું નથી अच्छा नहीं लगता, **कृच्छ्रेण** તથા મુશ્કેલીથી तथा कठिनाईसे, **विवर्धते च** તે બાળકની વૃદ્ધિ થાય છે उस बालककी वृद्धि होती है ॥ २३९ ॥

239. The child, who sucks this distasteful milk vitiated by vata, becomes emaciated. It does not relish the milk and its growth becomes difficult

**तथैव वायुः कुपितः स्तन्यमन्तर्विलोडयन् ।**
**करोति फेनसङ्घातं तत्तु कृच्छ्रात् प्रवर्तते ॥२४०॥**

**तथा एव** તેજ પ્રમાણે इसी प्रकार, **कुपितः** કુપિત कुपित, **वायुः** વાયુ वायु, **अन्तः स्तन्यम्** ક્ષીરાશયમાં સ્તન્યને क्षीराशयमें स्तन्यको, **विलोडयन्** વલોવીને विलोड़ित करके, **फेनसङ्घातम्** ફીણના સમૂહને फेनसंघातको, **करोति** બનાવે છે उत्पन्न करता है, **तत् तु** તેથી તે સ્તન્યની ततः उस स्तन्यकी, **कृच्छ्रात्** કષ્ટપૂર્વક કઠિનાઈસે, **प्रवर्तते** પ્રવૃત્તિ થાય છે प्रवृत्ति होती है ॥ २४० ॥

240. Similarly the provoked vata churns up the milk internally in the glands and makes it forthy. Consequently, it flows out with great difficulty.

**तेन क्षामस्वरो बालो बद्धविण्मूत्रमारुतः ।**
**वातिकं शीर्षरोगं वा पीनसं वाऽधिगच्छति ॥२४१॥**

**तेन** તે પીવાથી उसके पीनेसे, **बालः** બાળક बालक, **क्षामस्वरः** ક્ષીણ સ્વરવાળો क्षीण स्वरवाला, **बद्ध-विट्-मूत्र-मारुतः** અને ઝાડા- મૂત્ર તથા વાયુની અટકાયતવાળો થાય છે मल-मूत्र और वायुकी रुकावटवाला होता है, **वातिकम्** વળી તેને વાતજન્ય वातजन्य, **शीर्षरोगम् वा** શીર્ષરોગ शीर्षरोग, **पीनसम् वा** કે પીનસ या पीनसरोग, **अधिगच्छति** થાય છે होता है ॥ २४१ ॥

241. The child which drinks this milk becomes weak of voice and suffers from stasis of feces, of urine and flatus. It develops headache or coryza of the vata type.

**पूर्ववत् कुपितः स्तन्ये स्नेहं शोषयतेऽनिलः ।**
**रूक्षं तत् पिबतो रौक्ष्याद्बलह्रासः प्रजायते ॥२४२॥**

**पूर्ववत्** પહેલાંની પ્રમાણે જ पूर्ववत्, **कुपितः** કુપિત कुपित, **अनिलः** વાયુ वायु, **स्तन्ये** સ્તન્યમાંથી स्तन्यमेंसे, **स्नेहम्** સ્નેહને स्नेहको, **शोषयते** શોષી લે છે शोषण करता है, **तत्** તે उस, **रूक्षम्** રૂક્ષ ધાવણ रूक्ष दूधको, **पिबतः** પીતા બાળકને पीनेवाले बालकको, **रौक्ष्यात्** ધાવણની રૂક્ષતાને લીધે स्तन्यकी रूक्षतासे, **बलह्रासः** બળનો હ્રાસ बलह्रास, **प्रजायते** થાય છે होता है ॥ २४२ ॥

242. The vata which is provoked as before, dehydrates the unctuous element in the milk. The child, taking this unctuous milk, is reduced in

२३९. न चास्य—न चास्मै (ध. फ.)

२४०. तत्तु—ततः (ध. फ.)

२४१. अधिगच्छति—निगच्छति (ब.)

strength, by the lack of unctuous quality in the milk.

**पित्तमुष्णादिभिः क्रुद्धं स्तन्याशयमभिप्लुतम् ।**
**करोति स्तन्यवैवर्ण्यंनील पीतासितादिकम् ॥२४३॥**

उष्णादिभिः ઉષ્ણાદિથી उष्णादिसे क्रुद्धम् કુપિત થયેલું कुपित हुआ, पित्तम् પિત્ત पित्त, स्तन्याशयम् સ્તન્યાશયમાં स्तन्याशयमें, अभिप्लुतम् જઈને पहुंचकर, नील- નીલ नीले, पीत- પીત पीत, असितादिकम् કે કૃષ્ણ વગેરે या कृष्ण आदि, स्तन्यवैवर्ण्यम् ધાવણની વિવર્ણતા स्तन्यकी विवर्णता, करोति કરે છે करता है ॥ २४३ ॥

243. The pitta, getting provoked by hot articles and other similar fectors, reaching the mammary glands, causes discoloration of the milk into bluish, yellowish, dark and other shades

**विवर्णगात्रः स्विन्नः स्यात्तृष्णालुर्भिन्नविट् शिशुः ।**
**नित्यमुष्णशरीरश्च नाभिनन्दति तं स्तनम् ॥२४४॥**

शिशुः બાળક बच्चा, विवर्णगात्रः વિવર્ણ અંગોવાળો विवर्ण शरीरवाला, स्विन्नः પસીનાવાળો पसीनायुक्त, तृष्णालुः તરસવાળો तृष्णावाला, भिन्नविट् भिन्नविट् अतिसारका रोगी, नित्यम् તથા સતત और सदा, उष्ण-शरीरः च ઉષ્ણ શરીરવાળો उष्ण शरीरवाला, स्यात् થાય છે होता है, तम् स्तनम् અને તે સ્તનને और उस स्तनको, न अभिनन्दति ઇચ્છતો નથી नहीं चाहता ॥ २४४ ॥

244. The child who takes this milk gets changed in body color and is afflicted with perspiration, thirst and loose stools; its body is always felt to be warm, and it shows dislike for the breast-feed.

**पूर्ववत् कुपिते पित्ते दौर्गन्ध्यं क्षीरमृच्छति ।**
**पाण्ड्वामयस्तत्पिबतः कामला च भवेच्छिशोः २४५**

पूर्ववत् પહેલાંની જેમ पूर्ववत्, पित्ते कुपिते પિત્ત કુપિત થવાથી पित्तके कुपित होनेसे, क्षीरम् દૂધ दूध, दौर्गन्ध्यम् દુર્ગન્ધયુક્ત दुर्गन्धयुक्त, ऋच्छति થાય છે होता है, तत् તે इसको, पिबतः પીતા पीनेवाले, शिशोः બાળકને बच्चेको पाण्ड्वामयः પાંડુરોગ पांडुरोग, कामला च કે કમળો या कमला, भवेत् થાય છે होता है ॥ २४५ ॥

245. The pitta, provoked as before, gives a bad smell to the milk, and the child drinking that milk is afflicted with anemia and jaundice.

**क्रुद्धो गुर्वादिभिः श्लेष्मा क्षीराशयगतः स्त्रियाः ।**
**स्नेहान्वितत्वात्तत्क्षीरमतिस्निग्धं करोति तु ॥२४६॥**

स्त्रियाः સ્ત્રીના स्त्रीके, क्षीराशयगतः ક્ષીરાશયમાં રહેલ क्षीराशयमें पहुंचकर, गुर्वादिभिः ગુરુ વગેરે કારણોથી गुरु आदिसे, क्रुद्धः કોપેલો कुपित, श्लेष्मा કફ कफ, स्नेहान्वितत्वात् પોતાની સ્નિગ્ધતાને લીધે स्नेहयुक्त होनेसे, तत्क्षीरम् तु તે દૂધને उस क्षीरको, अतिस्निग्धम् અતિસ્નિગ્ધ अतिस्निग्ध, करोति કરે છે करता है ॥२४६॥

246. The kapha, provoked by heavy articles and other similar factors, reaches the woman's mammary glands and by its unctuous quality, it renders the milk hyper-unctuous.

**छर्दनः कुन्थनस्तेन लालालुर्जायते शिशुः ।**
**नित्योपदिग्धैः स्रोतोभिर्निद्राक्लमसमन्वितः ॥२४७॥**
**श्वासकासपरीतस्तु प्रसेकतमकान्वितः ।**

तेन તેનાથી उससे, शिशुः બાળક बच्चा, छर्दनः ઉલટી કર્યા કરે છે वमनशील, कुन्थनः કરાંઝતો कुन्थन करनेवाला, लालालुः લાળનો સ્રાવ કરતો लाला युक्त, नित्योपदिग्धैः હરરોજ ઉપલિપ્ત રહેલા नित्य कफसे उपलिप्त, स्रोतोभिः સ્રોતોથી યુક્ત स्रोतोंवाला, निद्रा- निद्रा- निद्रा, क्लमसमन्वितः તેમજ થાકવાળો एवं क्लमसे युक्त,

२४७. निद्राक्लमसमन्वितः—निद्राकासमसमन्वितः (अ. ध. प्र. सं.)

श्वास- શ્વાસ श्वास, कास અને કાસથી और कासले, परीतः પીડિત पीडित, प्रसेक- કફના સ્રાવ कफका स्राव, तमक-अन्वितः तु અને તમકવાળો और तमकवाला, जायते થાય છે होता है ॥२४७½॥

247. The child sucking this milk, suffers from vomiting, tussive sounds, dribbling of saliva, increase of mucus in body-channels, sleepiness, exhaustion, dyspnea, cough, ptyalism and asthma.

**अभिभूय कफः स्तन्यं पिच्छिलं कुरुते यदा ॥२४८॥**
**लालालुः शूनवक्त्राक्षिर्जडः स्यात्तत् पिबञ्छिशुः ।**

यदा कफः જ્યારે કફ जब कफ, स्तन्यम् સ્તન્યને स्तन्यको, अभिभूय દૂષિત કરીને दूषित करके, पिच्छिलम् ચીકણું पिच्छिल, कुरुते બનાવે છે ત્યારે बनाता है तब, तत् તેને उसको, पिबन् પીનાર पीनेवाला, शिशुः બાળક बालक, लालालुः લાળવાળો लालायुक्त, शून-वक्त्राक्षिः મુખ તથા આંખના સોજાવાળો सूजे हुए मुख और आंखवाला, जडः અને જડ और जड, स्यात् બને છે होता है ॥२४८½॥

248. When the Kapha vitiates the milk and makes it slimy, the child sucking this milk, suffers from slobber; its face and eyes become swollen and the child becomes dull.

**कफः क्षीराशयगतो गुरुत्वात् क्षीरगौरवम् ॥२४९॥**
**करोति गुरु तत् पीत्वा बालो हृद्रोगमृच्छति ।**
**अन्यांश्च विविधान्रोगान्कुर्यात्क्षीरसमाश्रितान् २५०**

क्षीराशयगतः ક્ષીરાશયગત क्षीराशयमें पहुंचा हुआ, कफः કફ कफ, गुरुत्वात् ગુરુતાને લીધે भारी होनेसे, क्षीरगौरवम् દૂધને ગુરુતાવાળું दूधको भारी, करोति કરે છે करता है, तत् गुरु તે ભારે દૂધ उस गुरु दूधको, पीत्वा પીવાથી पीकर, बालः બાળકને बच्चा, हृद्रोगम् હૃદ્રોગ हृद्रोगको, ऋच्छति થાય છે प्राप्त होता है, क्षीरसमाश्रितान् વળી તે કફ દૂધજન્ય और वह कफ क्षीरजन्य, अन्यान् બીજા अन्य, विविधान् વિવિધ नाना प्रकारके, रोगान् च રોગો रोगोंको, कुर्यात् કરે છે करता है ॥२४९-२५०॥

249-250. The kapha getting located in the mammary glands, causes heaviness of milk; owing to its quality of heaviness the child drinking that milk is afflicted with the diseases of the stomach and various other disorders born of morbid milk.

**क्षीरे वातादिभिर्दुष्टे संभवन्ति तदात्मकाः ।**

क्षीरे દૂધ दूध, वातादिभिः વાતાદિથી वातादिसे, दुष्टे દૂષિત થતાં दुष्ट होने पर तदात्मकाः તેનાથી થતા રોગો तज्जन्य रोग, संभवन्ति થાય છે होते हैं ॥२५०½॥

250½. If the breast-milk is vitiated by vata or other humors, diseases corresponding in characteristics to the humor will afflict the child.

क्षीरदोषे धात्र्याः संशोधनम्—

**तत्रादौ स्तन्यशुद्ध्यर्थं धात्रीं स्नेहोपपादिताम् २५१**
**संस्वेद्य विधिवद्वैद्यो वमनेनोपपादयेत् ।**

तत्र તેમાં उसमें, आदौ પ્રથમ प्रथम, वैद्यः વૈદ્ય वैद्य, स्तन्य- ધાવણની स्तन्यकी, शुद्ध्यर्थम् શુદ્ધિને માટે शुद्धिके लिए, स्नेह-उपपादिताम् સ્નેહન કરાવેલી स्नेहन कराई हुई, धात्रीम् ધાત્રીને धात्रीको, विधिवत् વિધિ મુજબ विधिपूर्वक, संस्वेद्य સ્વેદન કરાવીને स्वेदन कराके, वमनेन વમન वमन, उपपादयेत् કરાવવું करावे ॥२५१½॥

251-251½. For the purification of the breast milk, the physician should, at first, systematically treat the mother

२५०. करोति गुरु तत् पीत्वा बालो हृद्रोगमृच्छति—कुर्यात्स्नेहान्वितं पीतं तद् भावात्कफरोगवान् (ग. द.)

,, करोति गुरु तद्—अतिस्नेहान्वितं (च. कं. ब.)

दुग्धसे, यत् जे जो, घृतम् घी घी, उदियात् नीकळे निकले, तत् तेने उसको, धात्रीणाम् आमळांना आंवलेके, रसे रसमां रसमें, मज्ज्ञः गरमाळाना गोळना अमलतासकी मज्जाके, कल्केन कल्कथी कल्कसे, साधितम् साधीने सिद्ध करके पिबेत् पीवुं पान करे ॥१३॥

13. A medicated ghee may be made by taking the ghee obtained from the milk prepared with the purging cassia and the paste of the purging cassia-pulp and the expressed juice of emblic myrobalans; it may be taken as a purgative potion.

तदेव दशमूलस्य कुलत्थानां यवस्य च ।
कषाये साधितं सर्पिः कल्कैः श्यामादिभिः पिबेत् १४

दशमूलस्य दशमूळ दशमूलके, कुलत्थानाम् कळथी कुलथीके, यवस्य च अने जवना और जौके, कषाये क्वाथमां कषायमें, श्यामादिभिः श्यामा वगेरेना श्यामा आदिके कल्कैः कल्कनी साथे कल्कसे, साधितम् सिद्ध करेल सिद्ध, तत् घृत ते ज उसी, सर्पिः घी घृतको, पिबेत् पीवुं पीवे ॥ १४ ॥

14. Medicated ghee made by taking the purging cassia ghee and preparing it with the decoction of the deca radices horse-gram or barley and the paste of black turpeth etc., may be taken as a purgative potion.

आरग्वधस्य एकोऽरिष्टयोगः—

दन्तीकाथेऽञ्जलिं मज्ज्ञः शम्पाकस्य गुडस्य च ।
दत्त्वा मासार्धमासस्थमरिष्टं पाययेत च ॥१५॥

दन्तीकाथे दंतीना क्वाथमां दन्तीके क्राथमें, शम्पाकस्य गरमाळाना अमलतासकी, मज्ज्ञः गोळना मज्जाके, गुडस्य च अने गोळना और गुडके, अञ्जलिम् १६–१६ तोला १६–१६ तोके, दत्त्वा नाखी मिलाकर, मासार्धमासस्थम् दोढ मास सुधी तेने रहेवा देवो डेढ मास तक रख देवे, अरिष्टम् अरिष्ट थाय त्यारे ते अरिष्ट बनने पर इसे, पाययेत च पावो पिलावे ॥ १५ ॥

15. Adding 16 tolas of the pulp of the purging cassia and of gur into the decoction of the red physic nut, it should be allowed to ferment for a month and a half. The medicated wine thus prepared, may be used as potion.

आरग्वधस्य अनुक्तविरेचनयोगोपदेशः—

यस्य यत् पानमन्नं च हृद्यं स्वाद्वथ वा कटु ।
लवणं वा भवेत्तेन युक्तं दद्याद्विरेचनम् ॥१६॥

यस्य जेने जिसको, यत् जे जो, पानम् पान पान, अन्नम् च अने अन्न और अन्न, हृद्यम् हृद्य जेथ पसंद हो, स्वादु पछी ते मधुर चाहे वह मधुर, अथवा अथवा अथवा, कटु वा कटु कटु, लवणम् वा के लवण या नमकीन, भवेत् होय हो, तेन तेनी उसके, युक्तम् साथे साथ मिलाकर, विरेचनम् विरेचन विरेचन, दद्यात् देवुं देवे ॥ १६ ॥

16. The purgative dose should be given to a man mixed with whatever food and drink is agreeable in taste to him. i. e. either sweet, pungent or salt.

अध्यायोक्तविषयाः—

तत्र श्लोकौ—

द्राक्षारसे सुरासीध्वोर्दध्नि चामलकीरसे ।
सौवीरके कषाये च त्रिवृतो बिल्वकस्य च ॥१७॥

१५. दत्त्वा—कृत्वा (ह.)
,, अरिष्टं पाययेत् च—असुतं तत् प्रयोजयेत् (ह.)
,, पाययेत च—पाययेद्भिषक् (प. ध.)

१६. पानमन्नं—पानमन्नं (ध.)

१७. द्रक्षि—द्रा (ह.)
सौवीरके कषाये च त्रिवृतो बिल्वकस्य च—सौवीरके कषायेषु बिल्वसंपाकयोस्तथा (ह. ध. फ.)
,, ,, —सौवीरकेऽथ त्रिवृतः कषाये बिल्वकस्य च (ध. फ.)

लेहेऽरिष्टे घृते द्वे च योगा द्वादश कीर्तिताः ।
चतुरङ्गुलकल्पेऽस्मिन् सुकुमाराः सुखोदयाः ॥१८॥

तत्र તે વિષયમાં उस विषयमें, श्लोकौ ઉપસંહારના બે શ્લોક છે કે उपसंहारके दो श्लोक हैं कि, अस्मिन् આ इस, चतुरङ्गुलकल्पे ચતુરંગુલકલ્પમાં इस चतुरंगुल-कल्पमें, द्राक्षारसे દ્રાક્ષારસમાં द्राक्षारसमें, सुरासीध्वोः સુરામાં, સીધુમાં सुरामें, सीधुमें, दध्नि દહીંમાં दहीमें, आमलकीरसे च આમળાંના રસમાં आंवलेके रसमें, सौवीरके સૌવીરકમાં सौवीरकमें, त्रिवृतः ત્રિવૃતના કવાથમાં त्रिवृतके क्वाथमें, बिल्वकस्य च તેમજ બિલ્વના એવં बिल्वके, कषाये કષાયમાં कषायमें, लेहे લેહમાં लेहमें, अरिष्टे અને અરિષ્ટમાં એક એક और अरिष्टमें एक एक, घृते તથા ઘીમાં और घीमें, द्वे च બે दो, द्वादश એમ બાર इस तरह बारह, सुकुमाराः મૃદુ કોમળ, सुखोदयाः અને આરોગ્યદાયક और आरोग्यदायक, योगाः યોગો योग, कीर्तिताः કહેવામાં આવ્યા છે कहे हैं ॥ १७-१८ ॥

Here are the recapitulatory verses—

17-18. One preparation each in grape juice, Sura wine, Sidhu wine, in curds, the juice of emblic myrobalans, Sauveeraka wine, the decoction of turpeth or that of bael; one in the form of linctus, one in that of medicated wine and two in the form of ghee—thus, in all, twelve preparations suitable for delicate persons and attended with happy results are described in this chapter on the Pharmaceutics of the Purging Cassia.

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते कल्पस्थाने चतुरङ्गुलकल्पो नामाष्टमोऽध्यायः ॥ ८ ॥

इति આ પ્રમાણે इस प्रकार, अग्निवेशकृते અગ્નિવેશે રચેલા अग्निवेशसे बनाये, चरकप्रतिसंस्कृते तन्त्रे અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, अप्राप्ते અપ્રાપ્ત अप्राप्त, दृढबलसंपूरिते અને દઢબલે પૂરા કરેલા और दृढबलसे पूरित किये गये, कल्पस्थाने કલ્પસ્થાનમાં कल्पस्थानमें, चतुरङ्गुलकल्पः 'ચતુરંગુલકલ્પ' 'चतुरंगुलकल्प', नाम નામનો नामका, अष्टमः આઠમો आठवाँ, अध्यायः અધ્યાય સંપૂર્ણ થયો अध्याय समाप्त हुआ ॥ ८ ॥

8. Thus in the Section on Pharmaceutics, in the treatise compiled by Agnivesa and revised by Caraka, the eighth chapter entitled 'The Pharmaceutics of the Purging Cassia' not being available, the same as restored by Dridhabala is completed.

---

## नवमोऽध्यायः ।

## નવમો અધ્યાય अध्याय नौवाँ

## Chapter IX

तिल्वककल्पोपक्रमः—

अथातस्तिल्वककल्पं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

अथ अतः હવે અહીંથી अब आगे, तिल्वककल्पम् 'તિલ્વકકલ્પ' નામના અધ્યાયનું 'तिल्वककल्प' नामके अध्यायका, व्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

भगवान् ભગવાન भगवान, आत्रेयः આત્રેયે आत्रेयने, इति ह આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, आह स्म કહેલું છે कहा है ॥ २ ॥

1. We shall now expound the chapter entitled 'The Pharmaceutics of Tilwaka'.

2. Thus declared the Worshipful Atreya.

---

१८. सुखोदयाः प्रकीर्तिताः (ह)

तिल्वकस्य पर्यायाः —

**तिल्वकस्तु मतो लोध्रो बृहत्पत्रस्तिरीटकः ।**

तिल्वकः तु तिल्वकना तिल्वकके, लोध्रः लोध्र लोध्र, बृहत्पत्रः बृहत्पत्र बृहत्पत्र, तिरीटकः अने तिरीटक और तिरीटक, मतः के पर्यायो कहेलामां आव्या छे ये पर्याय कहे गये हैं ॥ २½ ॥

2½. Tilwaka is known by its synonyms such as Lodh, Brihatpatra and Tiritaka.

तिल्वकस्य उपयोगविधिः —

**तस्य मूलत्वचं शुष्कामन्तर्वल्कलवर्जिताम् ॥ ३ ॥**
**चूर्णयेत् त्रिधा कृत्वा द्वौ भागौ श्चोतयेत्ततः ।**
**लोध्रस्यैव कषायेण तृतीयं तेन भावयेत् ॥ ४ ॥**

अन्तर्वल्कल- अंदरनुं वल्कल अन्दरकी छालको, वर्जिताम् काढी नांखी छोड़कर, शुष्काम् सुकावेली सूखी हुई, तस्य तेना इसके, मूलत्वचम् तु मूळनी छालनुं मूलकी छालका, चूर्णयेत् चूर्ण करवुं चूर्ण करे, ततः पछी पीछे, त्रिधा त्रण भाग तीन भाग, कृत्वा करीने बनाकर, द्वौ बे दो, भागौ भागने भागको, लोध्रस्य एव लोध्रना लोधके, कषायेण कषायथी कषायसे, श्चोतयेत् गाळी लेवा छान लेवे, तेन ते गाळेला कवाथथी उस छाने हुए काथसे, तृतीयम् त्रीजा भागने तीसरे भागको, भावयेत् भावना देवी भावना देवे ॥ ३-४ ॥

3-4. Its dried root-bark with its inner layer removed should be triturated. Dividing that into three parts two parts should be washed and strained twenty-one times. Then the third part should be taken and impregnated with the strained solution.

४. श्चोतयेत्ततः-भावयेत्ततः (ग.)

**भागं तं दशमूलस्य पुनः काथेन भावयेत् ।**
**शुष्कं चूर्णं पुनः कृत्वा तत ऊर्ध्वं प्रयोजयेत् ॥ ५ ॥**

तम् ते इस, भागम् भागने भागको, पुनः फरीने फिर, दशमूलस्य दशमूळना दशमूलके, काथेन कवाथथी काथसे, भावयेत् भावना देवी भावना देवे, पुनः फरीने फिरसे, शुष्कम् सुकावी सूखाकर चूर्णम् चूर्ण चूर्ण, कृत्वा करी करके, ततः ऊर्ध्वम् ते पछी तदनन्तर, प्रयोजयेत् प्रयोग करवो प्रयोग करना चाहिए ॥ ५ ॥

5 That should again be impregnated with the decoction of decaradices. It should then be dried and powdered and made use of.

तिल्वकस्य दध्यादिभिः पञ्च योगाः —

**दधितक्रसुरामण्डमूत्रैर्बदरसीधुना ।**
**रसेनामलकानां वा ततः पाणितलं पिबेत् ॥ ६ ॥**

ततः ते पछी पीछे, पाणितलम् ते चूर्णनी एक तोलानी मात्रा उस चूर्णकी एक तोला मात्राको, दधि- दहीं दधि, तक्र- तक्र तक्र, सुरामण्ड- सुरामंड सुरामण्ड, मूत्रैः गोमूत्र गोमूत्र, बदरसीधुना बोरना सीधु बेरकी सीधु, आमलकानाम् के आमळाना या आंवलेके, रसेन वा रस साथे रससे, पिबेत् पीवी पीवे ॥ ६ ॥

6. It should be taken as potion in the dose of one tola mixed with curds, butter milk, supernatent part of sura wine, cow's urine, Sidhu wine prepared from jujube or with the expressed juice of the emblic myrobalans.

५ पुनः काथेन भावयेत्—कषायेण भावितं पुनः (ध. फ)
, तत ऊर्ध्वं प्रयोजयेत—स्निग्धस्विन्ने प्रयोजयेत (ध. फ)
६. दधितक्रसुरामण्ड - दधिमण्डसुरामण्ड (ध. फ.)

एकः सौवीरकयोगः—

**मेषशृङ्ग्यभयाकृष्णाचित्रकैः सलिले शृते ।**
**मरुजान् सुनुयात्तच्च जातं सौवीरकं यदा ॥७॥**
**भवेदञ्जलिना तस्य लोध्रकल्कं पिबेत् सदा ।**

मेषशृङ्गी- મરડાશીંગી मेढासिंगी, अभया- હરડે हरड, कृष्णा- પીપર पिप्पली, चित्रकैः અને ચિત્રકના और चित्रकके, शृते सलिले કવાથના પાણીમાં क्वाथके पानीमें, मरुजान् શેકેલા જવને। भूने हुए जौको, सुनुयात् આસવ કરવો। आसुत करे, तत् च ते वह, यदा જ્યારે जब, सौवीरकम् સૌવીરક सौवीरक, जातम् भवेत् થઈ જાય ત્યારે हो जाय तब, तस्य તેના उसके, अञ्जलिना ૧૬ તોલાની સાથે १६ तोलेके साथ, लोध्रकल्कम् લોધરનો કલ્ક लोध्रकल्कको, सदा હંમેશ सदा, पिबेत् પીવો पीवे ॥ ७½ ॥

7-7½. The paste of lodh should be taken as potion in a dose of 16 tolas of the Sauveeraka wine prepared by fermenting fried barley in the decoction of the tree of the woods chebulic myrobalans, long pepper and blue-flowered leadwort.

तिल्वकस्य सुरायोगः—

**सुरां लोध्रकषायेण जातां पक्षस्थितां पिबेत् ॥८॥**

लोध्रकषायेण લોધરના કષાયથી लोधके कषायसे, जाताम् થયેલ बनी, पक्षस्थिताम् અને એક પખવાડીઉં રાખી મૂકેલી और एक पक्ष रखी हुई, सुराम् સુરા सुरा, पिबेत् પીવી पीवे ॥ ८ ॥

8. The Sura wine, prepared from the decoction of lodh by keeping it for a fortnight, should be taken as potion.

तिल्वकस्य अरिष्टयोगः—

**दन्तीचित्रकयोर्द्रोणे सलिलस्याढकं पृथक् ।**
**समुत्क्वाथ्य गुडस्यैकां तुलां लोध्रस्य चाञ्जलिम् ॥९॥**
**आवपेत्तत् परं पक्षान्मद्यपानां विरेचनम् ।**

दन्ती- દન્તી दन्ती, चित्रकयोः અને ચિત્રક और चित्रकके, पृथक् જુદા જુદા पृथक् पृथक्, आढकम् ૨૫૬ તોલા २५६ तोले लेकर, सलिलस्य પાણી जलके, द्रोणे ૧૦૨૪ તોલામાં १०२४ तोलेमें, समुत्क्वाथ्य ઉકાળીને पकाकर, गुडस्य ગોળ गुड, एकाम् तुलाम् ४०० તોલા ४०० तोला, लोध्रस्य અને લોધર और लोध, अञ्जलिम् च १६ તોલા १६ तोले, आवपेत् નાખી રાખી મૂકવા मिलाकर रख देवे, पक्षात् એક પખવાડિયા पन्द्रह दिनके, परम् પછી पीछे, तत् ते वह, मद्यपानाम् મદ્ય પીનારનું मद्य पीनेवालेके लिए, विरेचनम् વિરેચન બને છે विरेचन बन जाता है ॥ ९½ ॥

9-9½. 256 tolas of each of red physic nut and white-flowered leadwort should be decocted separately in 1024 tolas of water, and 400 tolas of gur and 16 tolas of lodh should be added to it. That wine, prepared by keeping for a fortnight is an excellent purgative potion for persons addicted to wine.

कम्पिल्लकेन एको योगः—

**कम्पिल्लककषायेण दशकृत्वः सुभाविताम् ॥१०॥**
**मात्रां कम्पिल्लकस्यैव कषायेण पुनः पिबेत् ।**

कम्पिल्लक- કપીલાના रोरीके, कषायेण કવાથથી कषायसे, दशकृत्वः દશવાર दसबार, सुभाविताम् ભાવના દીધેલ भावना देकर, मात्राम् માત્રા मात्राको, कम्पिल्लकस्य કપીલાનાજ रोरीके ही, कषायेण કવાથની સાથે कषायसे, पुनः ફરીને फिर, पिबेत् પીવી पीवे ॥१०½॥

10-10½. A dose of powdered Tilwaka after being impregnated ten times in

७. मरुजान्–तण्डुलान् (झ.)
–तण्डुलां (ह. द.)
७½. सदा–तदा (क. ब. ह. ड.)

९½. मद्यपानां–मद्यपानात् (ब. फ.)
१०½. कम्पिल्लककषायेण तिल्वकस्य कषायेण (ह. त. द. च. फ)

the decoction of Kamala, should be taken mixed again with the decoction of Kamala.

त्रयो लेहयोगाः —

चतुरङ्गुलकल्पेन लेहोऽन्यः कार्य एव च ॥११॥

चतुरङ्गुल- गरमाळाना अमलतासके, कल्पेन कल्पमां कहेली विधि प्रमाणे कल्पमें कही हुई विधिके अनुसार, अन्यः बीजो दूसरा, लेहः लेह लेह, कार्यः च एव करवो जोईए बनाना चाहिए ॥ ११ ॥

11. A linctus should be made of it in the same pharmaceutical method as in the case of the purging cassia.

त्रिफलायाः कषायेण ससर्पिर्मधुफाणितः ।
लोध्रचूर्णयुतः सिद्धो लेहः श्रेष्ठो विरेचने ॥१२॥

त्रिफलायाः त्रिफलाना त्रिफलाके, कषायेण क्वाथथी कषायमें, ससर्पिर्मधु घी, मध घृत, मधु, फाणितः फाणित राब, लोध्रचूर्णयुतः अने लोधरनुं चूर्ण मेळवी और लोधका चूर्ण मिलाकर, सिद्धः सिद्ध करेलो सिद्ध किया, लेहः लेह लेह, विरेचने विरेचनमां विरेचनमें, श्रेष्ठः श्रेष्ठ छे श्रेष्ठ है ॥ १२ ॥

12. The linctus prepared by mixing powdered Tilwaka with the decoction of the three myrobalans, ghee, honey and treacle, is regarded the best for purgation.

तिल्वकस्य कषायेण कल्केन च सशर्करः ।
सघृतः साधितो लेहः स च श्रेष्ठो विरेचने ॥१३॥

तिल्वकस्य तिल्वकना तिल्वकके, कषायेण क्वाथ कषायसे, कल्केन च अने कल्क साथे और कल्कसे, सशर्करः साकर शर्करा, सघृतः अने घी नाखी और घीके साथ, साधितः तैयार करेलो सिद्ध किया, सः च ते वह, लेहः लेह लेह, विरेचने विरेचनमां विरेचनमें, श्रेष्ठः श्रेष्ठ छे श्रेष्ठ है ॥ १३ ॥

13. The linctus prepared by mixing the paste of Tilwaka with its own decoction and adding sugar and ghee, is the foremost medicine for purgation.

तिल्वकस्य चत्वारो घृतयोगाः —

अष्टाष्टौ त्रिवृतादीनां मुष्टींस्तु सनखान् पृथक् ।
द्रोणेऽपां साधयेत् पादशेषे प्रस्थं घृतात् पचेत् १४
पिष्टैस्तैरेव बिल्वांशैः समूत्रलवणैरथ ।
ततो मात्रां पिबेत् काले श्रेष्ठमेतद्विरेचनम् ॥१५॥

त्रिवृतादीनाम् त्रिवृत वगेरे नव विरेचन-द्रव्योनी त्रिवृतादि नौ विरेचन-द्रव्योंमेंसे, अष्ट अष्टौ आठ आठ आठ आठ, पृथक् जुदी जुदी पृथक् पृथक्, सनखान् मुष्टीन् तु अंतर्नखमुष्टि लई अन्तर्नखमुष्टि लेकर, अपाम् पाणीना जलके, द्रोणे एक द्रोणमां एक द्रोणमें, साधयेत् पकववी पकाये, पादशेषे चतुर्थांश बाकी रहे त्यारे चतुर्थांश रह जाये तब, समूत्रलवणैः गोमूत्र अने लवण-सहित गोमूत्र और लवणके साथ, बिल्वांशैः ४ तोला ४ तोले, पिष्टैः तैः एव ते विरेचन द्रव्योनाज कल्कथी उन विरेचन द्रव्योंके ही कल्कसे, घृतात् घी घृत, प्रस्थम् ६४ तोला ६४ तोले, पचेत् पकाववुं पकाये, अथ ततः पछी पीछे, काले योग्य समये उचित समय पर, मात्राम् तेनी मात्रा इसकी मात्राको, पिबेत् पीवी पीवे, एतत् आ यह, श्रेष्ठम् श्रेष्ठ श्रेष्ठ, विरेचनम् विरेचन छे विरेचन है ॥ १४-१५ ॥

14-15. Sixteen fistfuls of Tilwaka should be cooked along with eight fistfuls of each of turpeth etc., separately in 1024 tolas of water, till reduced to one fourth of the quantity. That should be cooked in 64 tolas of ghee with the paste of 4 tolas of each of those very drugs; it should be taken

१२. श्रेष्ठो विरेचने–श्रेष्ठं विरेचनम् (च. फ.)

१४. अष्टाष्टौ त्रिवृतादीनां मुष्टींस्तु सनखान् पृथक्–अष्टौ तु त्रिवृतादीनां मुष्टीरंतर्नखाः पृथक् (च.)

१५. समूत्रलवणैरथ–समूत्रलवणैर्भिषक् (च. ग.)

at the right time and in due dose mixed with cow's urine and rock salt.

लोध्रकल्केन मूत्राम्ललवणैश्च पचेद्घृतम् ।
चतुरङ्गुलकल्पेन सर्पिषी द्वे च साधयेत् ॥१६॥

लोध्रकल्केन लोधरना कल्कथी लोधके कल्कसे, मूत्र- मूत्र मूत्र, अम्ल- कांजी अम्ल, लवणैः च अने लवणोथी और लवणोंद्वारा, घृतम् घी घृत, पचेद् पकाववुं पकावे, चतुरङ्गुल- गरमाळाना अमलतासके, कल्पेन कल्पनी माफक कल्पके अनुसार, द्वे सर्पिषी च बीजां बे घी अन्य दो घृत, साधयेत् सिद्ध करवां सिद्ध करे ॥ १६ ॥

16. This is an excellent purgative preparation. Prepare a medicated ghee of cow's ghee in cow's urine, sour conji and rock salt, adding the paste of Tilwaka. Two other preparations of ghee may be made in the same method as described in the pharmaceutics of the purging cassia.

अध्यायोक्तार्थसंग्रहः—

तत्र श्लोकौ—

पञ्च दध्यादिभिस्त्वेका सुरा सौवीरकेण च ।
एकोऽरिष्टस्तथा योग एकः कम्पिल्लकेन च ॥१७॥

तत्र ते विषयमां उस विषयमें, श्लोकौ उपसंहारना बे श्लोक छे हे उपसंहारके दो श्लोक हैं कि, दध्यादिभिः दहीं वगेरेथी दधि आदिसे, पञ्च पांच पांच, सुरा सुराथी सुरासे, एका तु एक एक, सौवीरकेण च सौवीरकथी सौवीरकसे, एकः एक एक, तथा तथा तथा, अरिष्टः अरिष्टथी एक अरिष्टसे एक, कम्पिल्लकेन च अने कपीलाथी और रोहीसे, एकः एक एक, योगः योग थाय छे योग होता है ॥ १७ ॥

Here are the two recapitulatory verses—

17. Five preparations with curds etc., one of Sura wine one of Sauveeraka wine one of medicated wine and similarly one preparation with Kamala.

लेहास्त्रयो घृतेनापि चत्वारः संप्रकीर्तिताः ।
योगास्ते लोध्रमूलानां कल्पे षोडश दर्शिताः ॥१८॥

लेहाः लेहो लेहसे, त्रयः त्रण तीन, घृतेन अपि अने घीथी और घृतसे, चत्वारः चार योग चार योग, संप्रकीर्तिताः कह्या छे कहे हैं, लोध्रमूलानाम् आ लोधरना मूळना इस तिल्वकमूलके, कल्पे कल्पमां कल्पमें, ते षोडश ते सोळ वे सोलह, योगाः योग योग, दर्शिताः बताव्या छे दिखलाये हैं ॥ १८ ॥

18. Three preparations of linctuses and four of ghee have been described. Thus, in all, sixteen preparations have been expounded in this chapter on the pharmaceutics of Tilwaka.

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते कल्पस्थाने तिल्वककल्पो नाम नवमोऽध्यायः ॥९॥

इति आ प्रमाणे इस प्रकार, अग्निवेशकृते अग्निवेशे रचेला अग्निवेशसे बनाये, चरकप्रतिसंस्कृते तन्त्रे अने चरकथी प्रतिसंस्कार पामेला आ शास्त्रमां और चरकके द्वारा संस्कृत इस शास्त्रके, अप्राप्ते अप्राप्त अप्राप्त, दृढबल- संपूरिते अने दृढबले पूरा करेला और दृढबलसे पूरित किये गये, कल्पस्थाने कल्पस्थान विषे कल्पस्थानमें, तिल्वककल्पः 'तिल्वककल्प' 'तिल्वककल्प', नाम नामनो नामका, नवमः नवमो नौवाँ, अध्यायः अध्याय संपूर्ण थयो अध्याय समाप्त हुआ ॥ ९ ॥

9. Thus, in the Section on Pharmaceutics in the treatise compiled by Agnivesa and revised by Caraka, the ninth chapter entitled 'The Pharmaceutics of the Tilwaka' not being available, the same as restored by Dridhabala is completed.

१८. संप्रकीर्तिताः—संप्रदर्शिताः (ख. ग.)

# दशमोऽध्यायः ।

## દશમો અધ્યાય अध्याय दसवाँ

## Chapter X

सुधाकल्पोपक्रमः —

अथातः सुधाकल्पं व्याख्यास्यामः ॥१॥
इति ह स्माह भगवानात्रेयः ॥२॥

अथ अतः હવે અહીંથી अब आगे, सुधाकल्पम् 'સુધાકલ્પ' નામના અધ્યાયનું 'सुधाकल्प' नामके अध्यायका, व्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥१॥

भगवान् ભગવાન भगवान, आत्रेयः આત્રેયે आत्रेयने, इति ह આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, आह स्म કહેલું છે कहा है ॥२॥

1. We shall now expound the chapter entitled "The Pharmaceutics of the Thorny Milk-hedge plant.".

2. Thus declared the worshipful Atreya.

सुधागुणाः, सुधाप्रयोगानर्हा नराश्च —

विरेचनानां सर्वेषां सुधा तीक्ष्णतमा मता ।
सङ्घातं हि भिनत्त्याशु दोषाणां कष्टविभ्रमा ॥३॥
तस्मान्नैषा मृदौ कोष्ठे प्रयोक्तव्या कदाचन ।
न दोषनिचये चाल्पे सति मार्गपरिक्रमे ॥४॥

सर्वेषाम् સર્વ सब, विरेचनानाम् વિરેચનોમાં विरेचनोंमें, सुधा થોરને सुधा, तीक्ष्णतमा અત્યંત તીક્ષ્ણ अत्यन्त तीक्ष्ण, मता માનેલ છે मानी है, हि કારણ કે क्योंकि, दोषाणाम् તે દોષોના वह दोषोंके, संघातम् સમૂહને संघातको, आशु જલદી शीघ्र, भिनत्ति તોડી નાખે છે तोड़ती है, कष्टविभ्रमा च અને સમ્યક્ પ્રયોગ ન થાય તો અત્યન્ત કષ્ટ ઉત્પન્ન કરે છે और सम्यक् प्रयोग न होनेपर अत्यन्त कष्ट उत्पन्न करती है, तस्मात् તેથી इसलिए, एषा એનો इसका, मृदौ कोष्ठे મૃદુ કોઠામાં मृदु कोष्ठमें, कदाचन કદી પણ कभी भी, न प्रयोक्तव्या પ્રયોગ કરવો નહિ प्रयोग नहीं करना चाहिए, दोषनिचये દોષનો સંચય दोषका संचय, अल्पे જો અલ્પ હોય તો यदि अल्प हो तो, मार्गपरिक्रमे सति च અને જો બીજી કોઈ ચિકિત્સાથી કામ ચાલતું હોય તો પણ પ્રયોગ કરવો નહિ और यदि अन्य किसी चिकित्सासे कार्य चलता हो तो भी प्रयोग नहीं करना चाहिए ॥३-४॥

3-4. The thorny milk-hedge plant is regarded the most acute of all the purgative drugs. It quickly breaks up the accumulation of impurities and if wrongly used might lead to conditions difficult to cure. Therefore this should in no case be administered to a soft bowelled person nor in a condition of scanty accumulation of impurities nor in a condition where other measure can as well serve the purpose.

सुधाप्रयोगार्हा नराः —

पाण्डुरोगोदरे गुल्मे कुष्ठे दूषीविषार्दिते ।
श्वयथौ मधुमेहे च दोषविभ्रान्तचेतसि ॥५॥
रोगैरेवंविधैर्ग्रस्तं ज्ञात्वा सप्राणमातुरम् ।
प्रयोजयेन्महावृक्षं सम्यक् स ह्यवचारितः ॥६॥
सद्यो हरति दोषाणां महान्तमपि संचयम् ।

पाण्डुरोग- પાંડુરોગ पाण्डुरोग, उदरे ઉદરરોગ उदररोग, गुल्मे ગુલ્મ गुल्म, कुष्ठे કુષ્ઠ कुष्ठ, दूषीविषार्दिते દૂષીવિષથી થયેલી પીડા दूषीविषसे उत्पन्न पीड़ा, श्वयथौ સોજો શોથ, मधुमेहे મધુમેહ मधुमेह, दोष અને દોષોને કારણે और दोषोंके कारण, विभ्रान्तचेतसि च થયેલો ચિત્તવિભ્રમ उत्पन्न चित्तविभ्रम, एवंविधैः આવી જાતના इस प्रकारके, रोगैः રોગોથી रोगोंसे, ग्रस्तम् ઘેરાયેલા पीड़ित, आतुरम् રોગીને रोगीको, सप्राणम् સબળ बलवान, ज्ञात्वा જાણી जानकर, महावृक्षम्

१. सुधाकल्पं–महावृक्षकल्पं (त.)
४. मार्गपरिक्रमे–चान्यपरिक्रमे (ब. च. क.)
७. हरति–नुदति (च.)

થોરનો सुधावृक्षका, प्रयोजयेत् પ્રયોગ કરવો प्रयोग करे, हि કારણ કે क्योंकि, सम्यक् સારી રીતે भली प्रकार, अवचारितः પ્રયોગ કરવામાં આવેલો प्रयोग किया हुआ, सः તે वह, दोषाणाम् દોષોના दोषोंके, महान्तम् મહાન बड़े भारी, संचयम् સંચયને संचयका, सद्यः જલદી तुरन्त, हरति હરી લે છે नाश कर देता है ॥ ५-६½ ॥

5-6½. In patients affected with anemia, abdominal diseases, gulma, dermatosis, chronic poisoning, edema, diabetes, morbid psychic conditions and such other diseases, the thorny milk hedge plant should be administered if the patient is strong enough to withstand the drug. When properly administered, it quickly eliminates the impurities even if excessively accumulated.

सुधाभेदौ—

**द्विविधः स मतोऽल्पैश्च बहुभिश्चैव कण्टकैः ॥ ७ ॥**
**सुतीक्ष्णैः कण्टकैरल्पैः प्रवरो बहुकण्टकः ।**

सः થોરનું વૃક્ષ सुधावृक्ष, द्विविधः બે પ્રકારનું दो, प्रकारका, मतः માન્યું છે माना गया है, अल्पैः च એક નાના एक छोटे, बहुभिः च एव તથા ઘણા तथा बहुत, कण्टकैः કાંટાવાળું कांटोंवाला, सुतीक्ष्णैः અને બીજું અત્યંત તીક્ષ્ણ और दूसरा अत्यंत तीक्ष्ण, अल्पैः તથા થોડા કાંટાવાળું तथा थोडे कांटोंवाला, बहुकण्टकः એઓમાં ઘણા કાંટાવાળું इनमें बहुत कांटोंवाला, प्रवरः શ્રેષ્ઠ છે श्रेष्ठ है ॥ ७½ ॥

7. It is known to be of two kinds. One with small and numerous thorns, the other with very sharp and a small number of thorns. The one with numerous thorns is the superior variety.

७. ऽल्पैश्च–पैश्च (ख. ङ.)

सुधायाः पर्यायाः—

**स नाम्ना स्नुग्गुडा नन्दा सुधा निस्त्रिंशपत्रकः ॥ ८ ॥**

सुधा सः સુધા નામનું તે વૃક્ષ सुधा नामका वह वृक्ष, स्नुक् સ્નુક્ स्नुक्, गुडा ગુડા गुडा, नन्दा નંદા नन्दा, निस्त्रिंशपत्रकः અને નિસ્ત્રિંશપત્રક और निस्त्रिंशपत्रक, नाम्ना એ પર્યાયોથી કહેવાય છે इन पर्यायोंसे कहा जाता है ॥ ८ ॥

8. It is known by the synonyms of Snuk, Guda, Nanda, Sudha, Nistrimsapatraka.

सुधायाः उपयोगविधिः—

**तौ विपाट्याहरेत् क्षीरं शस्त्रेण मतिमान् भिषक् ।**
**द्विवर्षं वा त्रिवर्षं वा शिशिरान्ते विशेषतः ॥ ९ ॥**

मतिमान् બુદ્ધિમાન बुद्धिमान्, भिषक् વૈદ્ય वैद्य, विशेषतः ખાસ કરીને खासकर, शिशिरान्ते શિશિર-ઋતુને અંતે शिशिर ऋतुके अन्तमें, द्विवर्षम् वा બે વર્ષનાં दो बरसके, त्रिवर्षम् वा કે ત્રણ વર્ષનાં या तीन बरसके, तौ शस्त्रेण તે વૃક્ષોને શસ્ત્રથી उन वृक्षोंको शस्त्रसे, विपाट्य ચીરીને चीरकर, क्षीरम् દૂધ दूध, आहरेत् લેવું लेवे ॥ ९ ॥

9. The intelligent physician should incise the plants of two or three years of age with a sharp instrument and obtain the milk, specially at the end of winter.

सौवीरकादिभिः सप्त योगाः—

**बिल्वादीनां बृहत्या वा कण्टकार्यास्तथैकशः ।**
**कषायेण समांशं तं कृत्वाऽङ्गारेषु शोषयेत् ॥ १० ॥**

बिल्वादीनाम् બીલી વગેરે બૃહત્પંચમૂલ बिल्व आदि बृहत्पञ्चमूल, बृहत्याः ઊભી ભોરીંગણી बडी कटेरी,

८. स्नुग्गुडा नन्दा—नु गडा नन्दी (ङ.)
९. तौ–तं (क. ख. ग.)
,, तौ विपाट्याहरेत् क्षीरं शस्त्रेण मतिमान् भिषक्–तं पाटयित्वा शस्त्रेण क्षीरमुद्धारयेद्भिषक् (ग.)
१०. कषायेण समांशं तं–कषायं तं समांशेन (ख. ङ.)

तथा कण्टकार्याः वा तथा બેઠી ભોરીંગણી तथा कटेरी, एकशः એકોમાંથી કોઈ એકના इनमेंसे किसी एकके, कषायेण કવાથની સાથે कषायके साथ, तम् થોરના દૂધને स्नुहीके दूधको, समांशम् સમાન ભાગે समान भागमें, कृत्वा મેળવી मिलाकर, अङ्गारेषु અંગારા પર अंगारोंपर, शोषयेत् સૂકવી નાખવું सुखा देवे ॥ १० ॥

10. The milk of the thorny hedge plant mixed with equal quantity of any of the decoctions of the bael group of drugs or of indian nightshade or yellow-berried night-shade should be reduced to a thick consistency on coal fire

ततः कोलसमां मात्रां पिबेत् सौवीरकेण वा ।
तुषोदकेन कोलानां रसेनामलकस्य वा ॥११॥
सुरया दधिमण्डेन मातुलुङ्गरसेन वा ।

ततः તેમાંથી उसमेंसे, कोलसमाम् બોર સમાન बेरके समान, मात्राम् માત્રા मात्रा, सौवीरकेण वा સૌવીરક सौवीरक, तुषोदकेन તુષોદક तुषोदक, कोलानाम् બોરના રસ बेरके रस, आमलकस्य આમળાના आंवलेके, रसेन वा રસ रसके साथ, सुरया સુરા सुरा, दधिमण्डेन દધિમંડ दधिमण्ड, मातुलुङ्गरसेन वा કે બીજોરાના રસ સાથે या बिजौरेके रसके साथ, पिबेत् પીવી पीवे ॥११½॥

11-11½. Then it should be made into pills of the size of a jujube; it should be taken as potion mixed with Sauveeraka wine, Tushodaka wine, the juice of the emblic myrobalans, Sura wine. whey, or the juice of the pomello.

सुधायाः सर्पिषा मांसरसेन चैकैको योगः —

सातलां काञ्चनक्षीरीं श्यामादीनि कटुत्रिकम् ॥१२॥
यथोपपत्ति सप्ताहं सुधाक्षीरेण भावयेत् ।
कोलमात्रां घृतेनातः पिबेन्मांसरसेन वा ॥१३॥

सातलाम् સાતલા सातला, काञ्चनक्षीरीम् સ્વર્ણક્ષીરી स्वर्णक्षीरी, श्यामादीन् કાળું નસોતર વગેરે श्यामा आदि, कटुत्रिकम् અને ત્રિકટુ એમાંથી और त्रिकटु इनमेंसे, यथोपपत्ति જે કોઈ મળે તેને जो प्राप्त हो उसे सप्ताहम् સાત દિવસ સુધી सात दिन तक, सुधाक्षीरेण થોરના દૂધની सुधाक्षीरसे, भावयेत् ભાવના દેવી भावना देवे, अतः એમાંથી इसमेंसे, कोलमात्राम् બોર જેટલી માત્રા बेरके समान मात्रा, घृतेन घी साथे घीके साथ, मांसरसेन वा અથવા માંસરસ સાથે या मांसरसके साथ, पिबेत् પીવી पीवे ॥ १२-१३ ॥

12-13. As many as are available of these, viz., soap-pod, yellow milk plant, black turpeth and the other drugs of its group and the three spices should be impregnated for a week with the milk of the thorny milk-hedge plant. A pill made of the size of a jujube should be taken as potion with ghee or meat-juice

सुधाया एव पानकयोगः —

व्यूषणं त्रिफलां दन्तीं चित्रकं त्रिवृतां तथा ।
स्नुक्क्षीरभावितं सम्यग्विदध्याद्गुडपानकम् ॥१४॥

व्यूषणम् વ્યૂષણ त्रिकटु, त्रिफलाम् ત્રિફળા त्रिफला, दन्तीम् દન્તીમૂળ दन्तीमूल, चित्रकम् ચિત્રક चित्रक, तथा અને एवं, त्रिवृताम् નસોતરને त्रिवृतको, स्नुक्क्षीर- થોરના દૂધની स्नुहीके दूधसे, भावितम् ભાવના દઈ भावना देकर, गुडपानकम् ગોળના શરબત સાથે गुडके शरबतके साथ, सम्यक् विदध्यात् તેનો સારી રીતે પ્રયોગ કરવો उसका अच्छी तरह प्रयोग करे ॥१४॥

14. The three spices, the three myrobalans, red physic nut, white flowered leadwort and turpeth impregnated

११. ततः कोलसमां मात्रां—कोलप्रमाणां गुटिकां (ग)

,, ततः कोलसमां मात्रां पिबेत् सौवीरकेण वा—कोलप्रमाणां गुटिकां पिबेत् सौवीरकेण नाम् (घ.)

१२. कटुत्रिकम्—फलत्रिकम् (घ ब. फ.)

१४. गुडपानकम्—गुडपानके (घ.)

in the milk of the thorny milk-hedge plant should be administered with the syrup of gur.

एकः घ्रेययोगः—

त्रिवृतारग्वधं दन्तीं शङ्खिनीं सप्तलां समम् ।
गोमूत्रे रजनीं कृत्वा शोषयेदातपे ततः ॥१५॥
सप्ताहं भावयित्वैवं स्नुक्क्षीरेणापरं पुनः ।
सप्ताहं भावयेच्छुष्कं ततस्तेनापि भावितम् ॥१६॥
गन्धमाल्यं तदाघ्राय प्रावृत्य पटमेव च ।
सुखमाशु विरिच्यन्ते मृदुकोष्ठा नराधिपाः ॥१७॥

त्रिवृता नसोतर निसोत, आरग्वधम् गरमाळो अमलतास, दन्तीम् दन्तीमूळ दन्तीमूल, शङ्खिनीम् आखफूटामणी शंखिनी, सप्तलाम् अने सप्तला एओना चूर्णने और सप्तला इनके चूर्णको, समम् सम प्रमाणमां लई समान भागमें लेकर, गोमूत्रे गोमूत्रमां गोमूत्रमें, रजनीम् राखी रात एक रात, कृत्वा राखी भिगोकर, ततः पछी पीछे, आतपे तडकामां धूपमें, शोषयेत् सूकाववुं सुखा ले, एवम् आ प्रमाणे इस प्रकार, सप्ताहम् सात दिवस सुधी सात दिन तक, भावयित्वा भावनाओ आपी भावना देकर, पुनः वळी फिर, अपरम् बीजा दूसरे, सप्ताहम् सात दिवस सुधी सात दिन तक, स्नुक्क्षीरेण थोरना दूधनी स्नुहीक्षीरसे, भावयेत् भावना आपवी भावना देवे, शुष्कम् सूकावीने सुखाकर, ततः ते पछी तदनन्तर, तेन अपि ते चूर्णथी इस चूर्णसे, भावितम् अवचूर्णन द्वारा भावना आपेल अवचूर्णनद्वारा भावित, तत् गन्धमाल्यम् उत्तम सुगंधी पुष्पमाळाने उत्तम सुगन्धी पुष्पमालाको, आघ्राय सूंघवाथी सूंघनेसे, पटम् अने अवचूर्णनद्वारा भावना आपेल वस्त्रने और अवचूर्णनद्वारा भावित वस्त्रको, प्रावृत्य च एव ओढवाथी पण ओढ़नेसे भी, मृदुकोष्ठाः मृदु कोठावाळा मृदु कोष्ठवाले, नराधिपाः राजा वगेरे लोकोने राजा आदि लोगोंको, सुखम् सुखपूर्वक सुखपूर्वक, आशु जलदी जल्दी, विरिच्यन्ते विरेचन थाय छे विरेचन हो जाता है ॥ १५-१७ ॥

15-17. Turpeth, purging cassia, red physic nut, clenolipis and soap-pod taken in equal parts and soaked in cow's urine for a night should then be dried in the sun. This process should be repeated for seven days. Again impregnated for a week in the milk of the thorny milk hedge plant they should be dried and powdered. This powder, when sprinkled profusely on a sweet smelling flower garland or on the upper cloth and given for smelling or for wearing to a soft-bowelled person of royal descent, he will be moved to happy and quick purgative effect.

सुधायाः एकः लेहयोगः—

श्यामात्रिवृत्कषायेण स्नुक्क्षीरघृतफाणितैः ।
लेहं पक्त्वा विरेकार्थं लेहयेन्मात्रया नरम् ॥१८॥

श्यामा- काळुं नसोतर श्यामा, त्रिवृत्- तथा अरुण नसोतरना तथा अरुण त्रिवृतके, कषायेण क्वाथथी कषायसे, स्नुक्क्षीर- अने थोरनुं दूध स्नुहीका दूध, घृत- घी घी, फाणितैः तथा राब एओथी तथा राब इनसे, लेहम् लेह लेह, पक्त्वा पकावीने पकाकर, विरेकार्थम् विरेचन माटे विरेचनके लिए, नरम् मनुष्यने मनुष्यको, मात्रया मात्रासर मात्रासे, लेहयेत् चटाडवो चटावे॥१८॥

18. A linctus should be prepared with the decoction of black turpeth and turpeth, milk of the thorny hedge plant, ghee and treacle and administered in due dose, for the purpose of purgation.

१५. समम्—समांश (ध.)
,, गोमूत्रे रजनीं कृत्वा—निशि स्थितं गवां मूत्रे (ह. त. च. क.)
,, गोमूत्रे रजनीं कृत्वा शोषयेदातपे ततः—निशि स्थितं गवां मूत्रे शोषयेदातपे भिषक् (घ.)

१७. तदाघ्राय—समाघ्राय (ब. ग.)

१८. पक्त्वा—कृत्वा (च.)

यूषादिभिस्त्रयो योगाः—

**पाययेत्तु सुधाक्षीरं यूषैर्मांसरसैर्घृतैः ।**

सुधाक्षीरम् थोरनुं दूध स्नुहीके दूधको, यूषैः यूष यूष, मांसरसैः मांसरस मांसरस, घृतैः अने घीनी साथे और घीके साथ, पाययेत् पिवराववुं पिलावे ॥१८½॥

18½. The milk of the thorny milk hedge plant may be administered as potion along with soups, meat juices and medicated ghees.

शुष्कमत्स्येन मांसेन च एको योगः—

**भावितान्छुष्कमत्स्यान् वा मांसं वा भक्षयेन्नरः १९**

भावितान् थोरना दूधनी भावना आपेलां सेहुंडके दूधसे भावित की हुई, शुष्कमत्स्यान् वा सूकवेलां माछलां सुखी हुई मछलियोंको, मांसम् वा अथवा थोरना दूधनी भावना आपेला मांसने अथवा सेहुंडके दूधसे भावित मांसको, नरः मनुष्ये मनुष्य, भक्षयेत् खावां खाये ॥ १९ ॥

19. Dried fish and meat impregnated with that milk may also be eaten for purposes of purgation.

एकः सुरायोगः, द्वौ घृतयोगौ च—

**क्षीरेणामलकैः सर्पिश्चतुरङ्गुलवत् पचेत् ।**
**सुरां वा कारयेत् क्षीरे घृतं वा पूर्ववत् पचेत् ॥२०॥**

चतुरङ्गुलवत् गरमाळानी पेठे अमलतासके समान, क्षीरेण थोरना दूधथी स्नुहीके दूधसे, आमलकैः आमळाना क्वाथथी आंवलेके क्वाथसे, सर्पिः घी घृत, पचेत् पकाववुं पकावे, पूर्ववत् अगाउनी पेठे पूर्वकी भांति, क्षीरे थोरना दूधथी स्नुहीके दूधसे, सुराम् सुरा सुरा, कारयेत् बनाववी बनाये, घृतम् वा अथवा घृत अथवा घीको, पचेत् पकाववुं सिद्ध करे ॥ २० ॥

20. A ghee can be obtained from the prepared milk of thorny milk hedge mixed with emblic myrobalans as in the case of the purging cassia. Sura wine can be prepared from the milk of the thorny hedge plant; or even a ghee, as described before, can be prepared from it.

अध्यायोक्तार्थसंग्रहः—

तत्र श्लोकौ—

**सौवीरकादिभिः सप्त सर्पिषा च रसेन च ।**
**पानकं प्रेयलेहौ च योगा यूषादिभिस्त्रयः ॥२१॥**
**द्वौ शुष्कमत्स्यमांसाभ्यां सुरैका द्वे च सर्पिषी ।**
**महावृक्षस्य योगास्ते विंशतिः समुदाहृताः ॥२२॥**

तत्र श्लोकौ ते विषयमां उपसंहारना बे श्लोक छे के उस विषयमें उपसंहारके दो श्लोक हैं कि, सौवीरकआदिभिः सौवीरक वगेरेथी सौवीरक आदिसे, सप्त सात सात सर्पिषा घीथी एक घीसे एक, रसेन मांसरसथी एक मांसरससे एक, पानकम् पानकथी पानकसे एक, प्रेयलेहौ च प्रेयथी एक लेहथी एक प्रेयसे एक लेहसे एक, यूषादिभिः अने यूष वगेरेथी और यूषादिसे, त्रयः योगाः त्रण योगो तीन योग, शुष्कमत्स्य शुष्कमत्स्य सूखी मछली, मांसाभ्याम् अने मांसथी और मांससे, द्वौ बे दो सुरा एका सुराथी एक सुरासे एक, सर्पिषी च तथा घीथी तथा घीसे, द्वे बे दो, महावृक्षस्य आ प्रमाणे थोरना इस तरह महावृक्षके, ते विंशतिः ते वीस वे बीस, योगाः योगो योग, समुदाहृताः कह्या छे कहे हैं ॥ २१-२२ ॥

Here are the recapitulatory verses—

21-22. Seven preparations with sauveeraka wine etc., one with ghee, one with meat-juice, one preparation of syrup, one of snuff and one of linctus, three preparations administered with soups etc., two preparations consisting of dry fish and meat, one of Sura wine and two of ghee—thus, in

१९. भावितान्छुष्कमत्स्यान् वा मांसं वा भक्षयेन्नरः—भावितं शुष्कमत्स्यं वा मांसं वा भक्षयेन्नरः (ह.)

२०. घृतं—सुरां (ह.)

२२. महावृक्षस्य सुधाकल्पस्य (च ह.)

all twenty preparations of the thorny milk hedge plant have been described.

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते कल्पस्थाने सुधाकल्पो नाम दशमोऽध्यायः ॥१०॥**

इति આ પ્રમાણે इस प्रकार, अग्निवेशकृते અગ્નિવેશે રચેલા अग्निवेशसे बनाये, चरकप्रतिसंस्कृते तन्त्रे અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, अप्राप्ते અપ્રાપ્ત अप्राप्त, दृढबलसंपूरिते અને દૃઢબલે પૂરા કરેલા और दृढबलसे पूरित किये गये, कल्पस्थाने કલ્પસ્થાન વિષે कल्पस्थानमें, सुधाकल्पः 'સુધાકલ્પ' सुधाकल्प', नाम નામનો नामका, दशमः દશમો दसवाँ, अध्यायः અધ્યાય સંપૂર્ણ થયો अध्याय समाप्त हुआ ॥ १० ॥

10. Thus, in the Section on Pharmaceutics in the treatise compiled by Agnivesa and revised by Caraka, the tenth chapter entitled 'The Pharmaceutics of the Thorny Milk-hedge plant' not being available, the same as restored by Dridhabala, is completed.

---

# एकादशोऽध्यायः ।

## અગિયારમો અધ્યાય अध्याय ग्यारहवाँ

## Chapter XI

सप्तलाशङ्खिनीकल्पोपक्रमः —

**अथातः सप्तलाशङ्खिनीकल्पं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

अथ अतः હવે અહીંથી अब आगे, सप्तलाशङ्खिनीकल्पम् 'સપ્તલાશંખિનીકલ્પ' નામના અધ્યાયનું 'सप्तलाशंखिनीकल्प' नामके अध्यायका, व्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥१॥

भगवान् ભગવાન भगवान, आत्रेयः આત્રેયે आत्रेयने, इति ह આ વિષયમાં નીચે પ્રમાણે ज इस विषयमें निम्न प्रकारसे ही, आह स्म કહેલું છે कहा है ॥२॥

1. We shall now expound the chapter entitled "The Pharmaceutics of the Soap pod and Clenolipis."

2. Thus declared the worshipful Atreya.

सप्तलाशङ्खिन्योः पर्यायाः —

**सप्तला चर्मसाह्वा च बहुफेनरसा च सा ।**
**शङ्खिनी तिक्तला चैव यवतिकाऽक्षि(क्ष)पीडकः ॥३॥**

चर्मसाह्वा च ચર્મસાહ્વા चर्मसाह्वा, बहुफेनरसा च અને બહુફેનરસા और बहुफेनरसा, सा सप्तला તે સપ્તલાના પર્યાયો છે वे सप्तलाके पर्याय हैं, तिक्तला અને તિક્તલા और तिक्तला, यवतिका યવતિક્તા यवतिका, अक्षिपीडकः च एव અને અક્ષિપીડક એ और अक्षिपीडक ये, शङ्खिनी શંખિનીના પર્યાયો છે शङ्खिनीके पर्याय हैं ॥ ३ ॥

3. Soap pod is also known by its synonyms of Saptala, Charmasahva and Bahuphenarasa while Clenolipis is known by the names of Sankhini, Tiktala, Yavatikta and Akshipeedaka.

सप्तलाशङ्खिन्योः गुणाः —

**ते गुल्मगरहृद्रोगकुष्ठशोफोदरादिषु ।**
**विकासितीक्ष्णरूक्षत्वाद्योज्ये श्लेष्माधिकेषु तु ॥४॥**

ते ते બન્ને उन दोनोंका, विकासि- વિકાસી विकासी, तीक्ष्ण- તીક્ષ્ણ तीक्ष्ण, रूक्षत्वात् અને રૂક્ષ હોવાથી और रूक्ष होनेके कारण, गुल्म- ગુલ્મ गुल्म, गर- ગરદોષ गरदोष, हृद्रोग- હૃદ્રોગ हृदयरोग, कुष्ठ- કુષ્ઠ कुष्ठ, शोफ- શોફ शोफ, उदरादिषु અને ઉદરરોગ વગેરેમાં और उदरादि रोगोंमें, श्लेष्माधिकेषु तु જે શ્લેષ્મની અધિકતાવાળા હોય તેઓમાં जो कफकी अधिकतावाले

३. शङ्खिनी तिक्तला चैव—शङ्खिनी तिक्तका ज्ञेया (च. फ.)
" " —शङ्खिनी तिक्तनाका च (च. फ.)

हों उनमें, योज्ये યોજવા લાયક છે प्रयोग करना चाहिए ॥ ४ ॥

4. These should be administered in gulma, chronic poisoning, cardiac-disorder, dermatosis, edema, abdominal disease etc., and in conditions of predominance of kapha, as they are anti-spasmodic, acute and dry in quality.

सप्तलाशङ्खिन्योः ग्राह्यमङ्गम्—

**नातिशुष्कं फलं ग्राह्यं शङ्खिन्या निस्तुषीकृतम् ।**
**सप्तलायाश्च मूलानि गृहीत्वा भाजने क्षिपेत् ॥ ५ ॥**

नातिशुष्कम् બહુ સુકાઈ નહિ ગયેલું न बहुत सूखा हुआ, निस्तुषीकृतम् અને ફોતરાં ઉતારેલું और तुषरहित, शङ्खिन्याः શંખિનીનું शंखिनीका, फलम् ફળ फल, ग्राह्यम् ગ્રહણ કરવા લાયક છે ग्रहण करना चाहिए, सप्तलायाः ચીકાખાઈનાં चीकेकाईके, मूलानि च મૂળ मूलको, गृहीत्वा લઈને लेकर, भाजने વાસણમાં पात्रमें, क्षिपेत् રાખવાં रख देवे ॥ ५ ॥

5. The fruits of the clenolipis should be gathered before they are very dry, and excorticated. The roots of soap-pod should be gathered and both these should be preserved in a pot.

सप्तलाशङ्खिन्योः षोडश कल्कयोगाः —

**अक्षमात्रं तयोः पिण्डं प्रसन्नालवणायुतम् ।**
**हृद्रोगे कफवातोत्थे गुल्मे चैव प्रयोजयेत् ॥ ६ ॥**
**प्रियालपीलुकर्कन्धुकोलाम्रातकदाडिमैः ।**
**द्राक्षापनसखर्जूरबदराम्लपरूषकैः ॥ ७ ॥**
**मैरेये दधिमण्डेऽम्ले सौवीरकतुषोदके ।**
**सीधौ चाप्येष कल्पः स्यात् सुखं शीघ्रविरेचनः ॥८॥**

६. प्रसन्ना—मदिरा (ह.)
,, कफवातोत्थे—वातकफजे (ग.)
,, हृद्रोगे कफवातोत्थे—हृद्रोगकफवातार्ते (च. ज.)
७. प्रियाल—पियाल (च.)
,, कोलाम्रातक—कोषाम्रातक (च.)

प्रसन्ना- પ્રસન્ના प्रसन्ना, लवण- અને લવણ और लवणसे, आयुतम् સહિત मिलाकर, तयोः તે બન્નેનો इन दोनोंकी, अक्षमात्रम् એક તોલા જેટલો एक तोला मात्राके पिण्डम् પિંડ पिण्डको, कफवातोत्थे કફવાતજન્ય कफवातजन्य, हृद्रोगे હૃદ્રોગમાં हृद्रोग, गुल्मे एव च અને ગુલ્મમાં और गुल्ममें, प्रियाल- ચારોળી चिरौंजी, पीलु- પીલુ पीलु, कर्कन्धु- ચણીબોર झड़बेर, कोल- બોર बेर, आम्रातक- અંબાડા अंबाड़ा, दाडिमैः દાડમ अनार, द्राक्षा- દ્રાક્ષ मुनक्का, पनस- ફણસ कटहल, खर्जूर- ખજૂર खजूर, बदराम्ल- ખાટાં બોર बदराम्ल, परूषकैः અને ફાલસા સાથે और फालसाके साथ, प्रयोजयेत् પ્રયોજવો કોઈએ प्रयोग करना चाहिए, मैरेये મૈરેયમાં मैरेयमें, अम्ले ખાટા खट्टे, दधिमण्डे દધિમંડમાં दधिमडमें, सौवीरक- સૌવીરકમાં सौवीरकमें, तुषोदके તુષોદકમાં तुषोदकमें, सीधौ च અને સીધુમાં और सीधुमें, अपि પણ भी, एषः આ यही, कल्पः કલ્પ છે कल्प है, सुखम् તેથી સુખપૂર્વક इससे सुखपूर्वक, शीघ्र- અને જલદી और शीघ्र, विरेचनः વિરેચન विरेचन, स्यात् થાય છે होता है ॥ ६-८ ॥

6-8. A measure of one tola of the paste of these drugs mixed with Prasanna wine and rock-salt should be administered in cardiac disorder caused by kapha and vata, and also in gulma. This paste administered with the decoctions of Buchanan's mango, tooth brush tree, wild jujube, small jujube, indian hog-plum, pomegranate, grape, jack fruit, date, sour jujube, sweet falsah or with Maireya wine, sour whey, Sauveeraka wine, Tushodaka wine, or Sidhu wine, acts as a quick and easeful purgative.

सप्तलाशङ्खिन्योः षट् तैलयोगाः —

**तैलं विदारिगन्धाद्यैः पयसि क्वथिते पचेत् ।**
**सप्तलाशङ्खिनीकल्के त्रिवृच्छ्यामार्धभागिके ॥ ९ ॥**

**दधिमण्डेन सन्नीय सिद्धं तत् पाययेत च ।**

विदारिगन्धाद्यैः વિદારીગંધા વગેરે સાથે विदारीगन्धादिके साथ, क्वथिते ઉકાળેલા उबाले हुए, पयसि દૂધમાં दूधमें, त्रिवृच्छ्यामा ત્રિવૃત તથા શ્યામાના એક ભાગનો કલ્ક त्रिवृत और श्यामाके एक भागका कल्क, आर्धभागिके અને તેથી અરધા ભાગનો और इनसे आधे भागका, सप्तला- ચીકાખાઈ चीकेकाई, शङ्खिनी- અને આંખફૂટામણીનો और शंखिनीके, कल्के કલ્ક નાખી તેમાં कल्क डालकर उसमें, तैलम् તેલ तैल, पचेत् પકાવવું सिद्ध करे, सिद्धम् સિદ્ધ થયેલા सिद्ध हुए, तत् તે તેલને उस तैलको, दधिमण्डेन દહીંના મંડ સાથે दहीके मंडमें, सन्नीय મેળવી मिलाकर, पाययेत च પાવું જોઈએ पिलाये ॥ ९½ ॥

9-9½. The oil cooked in the milk prepared with the drugs of the tick-trefoil group, with the paste of soap-pod and clenolipis and half its quantity of the paste of turpeth and black turpeth, should be administered as potion along with whey.

**शङ्खिनीचूर्णभागौ द्वौ तिलचूर्णस्य चापरः ॥१०॥**
**हरीतकीकषायेण तैलं तत्पीडितं पिबेत ।**
**अतसीसर्षपैरण्डकरञ्जेष्वेव संविधिः ॥११॥**

द्वौ शङ्खिनी-चूर्ण- भागौ આંખફૂટામણીના બે ભાગ शंखिनीके चूर्णके दो भाग, तिलचूर्णस्य च અને તલના ચૂર્ણનો और तिलचूर्णका, अपरः બીજો એક ભાગ दूसरा एक भाग, तत्पीडितम् તેઓને પીસી કાઢેલું इनको पीसकर निकाले हुए, तैलम् તેલ तैलको, हरीतकी- હરડેના हरड़के, कषायेण ક્વાથ સાથે कषायके साथ, पिबेत् પીવું पीवे, अतसी- અળસી अलसी, सर्षप- સરસવ सरसों, एरण्ड- એરંડ एरण्ड, करञ्जेषु અને કરંજમાં પણ और करञ्जमें भी, एषः આ જ પ્રકારની यही, संविधिः વિધિ છે विधि बरतनी चाहिए ॥ १०-११ ॥

10-11. Taking the powder of clenolipis two parts and one part of the powder of til, oil should be expressed out of that. This should be taken with the decoction of chebulic myrobalans. The same is the process in the case of linseed, rapeseed, castor and indian beech.

सप्तलाशङ्खिन्योः अष्टौ घृतयोगाः —

**शङ्खिनीसप्तलासिद्धात् क्षीराघदुदियाद्धृतम् ।**
**कल्कभागे तयोरेव त्रिवृच्छ्यामार्धसंयुते ॥१२॥**
**क्षीरेणालोड्य संपक्कं पिबेत्तच्च विरेचनम् ।**

शङ्खिनी- આંખફૂટામણી शंखिनी, सप्तला- અને ચીકાખાઈથી और चीकेकाईसे, सिद्धात् સિદ્ધ કરેલા सिद्ध किये, क्षीरात् દૂધમાંથી दूधसे, यत् જે जो, घृतम् ઘી घी, उदियात् નીકળે बने, तत् च તેને उसे, त्रिवृत्-श्यामा- ત્રિવૃત તથા શ્યામાના त्रिवृत एवं श्यामाके, अर्धसंयुते અર્ધા ભાગના કલ્કથી आधे भागके कल्कसे, तयोः एव અને શંખિની તથા સપ્તલાના और शंखिनी तथा सप्तलाके, कल्कभागे એક ભાગના કલ્કથી एक भागके कल्कसे, संपक्कम् પકાવી पकाकर, क्षीरेण દૂધમાં दूधमें, आलोड्य ઘોળી मिलाकर, पिबेत् પીવું पीवे, तत् च તે वह, विरेचनम् વિરેચન લાવે છે विरेचन लाता है ॥ १२½ ॥

12-12½. A medicated ghee should be prepared by taking the ghee obtained from the milk prepared with clenolipis and soap-pod in four parts the quantity of milk and the paste of the same two drugs as well as the same quantity of the paste of turpeth and black turpeth. This should be taken as a purgative potion.

९½. सन्नीय--सन्नाय (ख. ह त. थ.
१०. तिलचूर्णस्य--नीलीचूर्णस्य (ह. थ.)

१२. कल्कभागे-कल्कभागं (थ.)
,, संयुते--संयुतम् (थ.)
१३. संपक्कं-विपचेत् (थ.)

**दन्तीद्रवन्त्योः कल्पोऽयमजश्रृङ्ग्यजगन्धयोः ॥१३॥**
**क्षीरिण्या नीलिकायाश्च तथैव च करञ्जयोः ।**
**मसूरविदलायाश्च प्रत्यक्पर्ण्यास्तथैव च ॥१४॥**
**द्विवर्गार्धांशकल्केन तद्वत् साध्यं घृतं पुनः ।**

अयम् कल्पः આ જ કલ્પ यही कल्प, दन्तीद्रवन्त्योः દન્તી તથા દ્રવન્તીને दन्ती तथा द्रवन्तीका, अजश्रृङ्गी- અજશૃંગી अजशृंगी, अजगन्धयोः તથા અજગંધાને તથા अजगन्धाका, क्षीरिण्याः ક્ષીરિણીને क्षीरिणीका, नीलिकायाः च તથા નીલિકાને तथा नीलिकाका, तथा एव करञ्जयोः च બન્ને કરંજને दोनों करंजोंका, मसूर- विदलायाः च અને શ્યામલતા और श्यामलता, तथा एव તથા तथा, प्रत्यक्पर्ण्याः च ઉંદરકનીને छे मूषा- कर्णीका है, द्विवर्गार्धांश. આ બબ્બેના જોડકાના અરધા ભાગના इन दोदोके वर्गोके अर्धांश, कल्केन કલ્કથી कल्कसे, तद्वत् પૂર્વવત્ पूर्ववत्, घृतम् ઘી घृत, साध्यम् पुनः સિદ્ધ કરવું सिद्ध करे ॥ १३-१४½ ॥

13-14½. The same is the process in the preparation of medicated ghee in the case of red physic nut and physic nut, shell and wild carrot, yellow milk plant and indigo plant, indian beech, and jungle cork tree as also in the case of lentil and kidney-leaved ipomea. Again, taking half part of the paste of each of this dyad of drugs a medicated ghee may be prepared.

**शङ्खिनीसप्तलाधात्रीकषाये साधयेद्घृतम् ॥१५॥**

शङ्खिनी- આખફૂટામણી शंखिनी, सप्तला- ચીકાખાઈ चीकेकाई, धात्री- અને આમળાના और आंवलेके, कषाये કવાથમાં कषायमें, घृतम् ઘી घृत, साधयेत् સિદ્ધ કરવું सिद्ध करे ॥१५॥

15. Prepare a medicated ghee with the decoction of clenolipis, soap-pod and emblic myrobalans.

सप्तलाशङ्खिन्योः त्रयो लेहयोगाः, कम्पिल्लकेनैको योगश्च—
**त्रिवृत्कल्पेन सर्पिश्च त्रयो लेहाश्च लोध्रवत् ।**
**सुराकम्पिल्लयोर्योगः कार्यो लोध्रवदेव च ॥१६॥**

त्रिवृत्कल्पेन અથવા ત્રિવૃતના કલ્પની માફક અથવા त्रिवृतकल्पके समान, सर्पिः च ઘૃતપાક घृतपाक, लोध्रवत् લોધરની પેઠે लोधके समान, त्रयः ત્રણ तीन, लेहाः च ચાટણ लेह, सुराकम्पिल्लयोः અને સુરા તથા કપીલાને और सुरा तथा रोरीका, योगः યોગ योग, लोध्रवत् एव લોધરની માફક જ लोधके समान ही, कार्यः કરવો बनाना चाहिए ॥ १६ ॥

16. One preparation of ghee can be made as in the case of turpeth; and three linctuses as in the case of lodh. One preparation in Sura wine and one with Kamala may be made in the same manner as lodh.

सप्तलाशङ्खिन्योः पञ्च सन्धानयोगाः —
**दन्तीद्रवन्त्योः कल्पेन सौवीरकतुषोदके ।**
**अजगन्धाजश्रृङ्ग्योश्च तद्वत् स्यातां विरेचने ॥१७॥**

तद्वत् તે જ પ્રમાણે उसकी भांति, दन्ती- દન્તી दन्ती, द्रवन्त्योः અને દ્રવન્તીના और द्रवन्तीके, कल्पेन કલ્પમાં कल्पमें, सौवीरकतुषोदके સૌવીરક તથા તુષોદક કહેવામાં આવશે सौवीरक तथा तुषोदक कहे जावेंगे, तद्वत् તે જ પ્રમાણે उसी प्रकार, अजगन्धा- બાકુળી ડુકુ, अजश्रृङ्ग्योः च અને અજશૃંગીના સૌવીરક તથા તુષોદક और अजशृङ्गीके सौवीरक तथा तुषोदक, विरेचने વિરેચન માટે विरेचनके लिए, स्याताम् કરવાં बनाना चाहिए ॥ १७ ॥

१४. क्षीरिण्या नीलिकायाश्च—स्यात् क्षीरिणीनीलिकयोः (ब)
,, प्रत्यक्पर्ण्याः—प्रत्यक्श्रेण्याः (क. छ. ड. त. फ)
१४½. द्विवर्गार्धांशकल्केन—विडङ्गार्धांशकल्केन (ख. ड.)
१५ साधयेत्—चापरम् (क. ब.)
,, साधयेद्घृतम्—चापरं स्मृतम् (ब.)

१६ त्रिवृत्कल्पेन—त्रिवृत्कल्केन (ज)
,, लोध्रवत्—पूर्ववत् (ड. द. ब. फ.)
१७ तद्वत् स्याताम्—कार्ये स्याताम् (ब.)

17. In the same pharmaceutical process as red physic nut and physic nut, these can be prepared in Sauveeraka and Tushodaka wines. Similarly they can be prepared in the decoction of wild carrot and shell for the purpose of purgation.

अध्यायोक्तविषयाः—

तत्र श्लोकौ—
कषाया दश षट् चैव षट् तैलेऽष्टौ च सर्पिषि ।
पञ्च मद्ये त्रयो लेहा योगः कम्पिल्लके तथा ॥१८॥
सप्तलाशङ्खिनीभ्यां ते त्रिंशदुक्ता नवाधिका ।
योगाः सिद्धाः समस्ताभ्यामेकशोऽपि च ते हिताः ॥

तत्र ते विषयमां उस विषयमें, श्लोकौ उपसंहारना बे श्लोक छे के उपसंहारके दो श्लोक हैं कि, कषायाः कषायोमां कषायमें, दशषट् च एव सोळ सोलह, तैले तेलमां तैलमें, षट् छ छः, सर्पिषि घीमां घीमें, अष्टौ आठ आठ, मद्ये मद्यमां मद्यमें, पञ्च पांच पांच, लेहाः लेहमां लेहमें, त्रयः त्रण तीन, तथा कम्पिल्लके कपीलामां एक योग रोरीमें एक, ते ते वे, नवाधिका त्रिंशत् ओगणचालीस उनचालीस, योगाः योग योग, उक्ताः कहेवामां आव्या छे कहे गये हैं, सप्तला- चीकाखाई चीकेकाई, शङ्खिनीभ्याम् अने आंखफूटामणी और शंखिनी, समस्ताभ्याम् बन्नेथी दोनोंसे, एकशः एक एकथी अथवा एक एकसे, अपि च पण भी, सिद्धाः तैयार थयेला तैयार हुए, ते हिताः ते योगो हितकर छे वे योग हितकारी हैं ॥ १८-१९ ॥

Here are the two recapitulatory verses—

18-19. Sixteen preparations of decoctions, six preparations in oil, eight in ghee, five in wine, three preparations of linctuses and one preparation with kamala—thus, in all, thirty-nine tested preparations are there of soap-pod and clenolipis used in combination. They (soap-pod and clenolipis) are beneficial, used either together or even singly.

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते कल्पस्थाने सप्तलाशङ्खिनी-कल्पो नामैकादशोऽध्यायः ॥ ११ ॥

इति आ प्रमाणे इस प्रकार, अग्निवेश-कृते अग्निवेशे रचेला अग्निवेशसे बनाये, चरक-प्रतिसंस्कृते तन्त्रे अने चरकथी प्रतिसंस्कार पामेला आ शास्त्रमां और चरकके द्वारा संस्कृत इस शास्त्रके, अप्राप्ते अप्राप्त अप्राप्त, दृढबलसंपूरिते अने दृढबले पूरा करेला और दृढबलसे पूरित किये गये, कल्पस्थाने कल्पस्थानमां कल्पस्थानमें, सप्तलाशङ्खिनीकल्पः 'सप्तला-शंखिनीकल्प' 'सप्तलाशंखिनीकल्प' नाम नामनो नामका, एकादशः अगियारमो ग्यारहवाँ, अध्यायः अध्याय संपूर्ण थयो अध्याय समाप्त हुआ ॥ ११ ॥

11. Thus, in the Section on Pharmaceutics in the treatise compiled by Agnivesa and revised by Caraka, the eleventh chapter entitled 'The Pharmaceutics of the Soap-pod and Clenolipis' not being available, the same as restored by Dridhabala, is completed.

---

## द्वादशोऽध्यायः ।

## बारमो अध्याय अध्याय बारहवाँ

## Chapter XII

दन्तीद्रवन्तीकल्पोपक्रमः—

अथातो दन्तीद्रवन्तीकल्पं व्याख्यास्यामः ॥१॥
इति ह स्माह भगवानात्रेयः ॥२॥

अथ अतः हवे अहींथी अब आगे, दन्तीद्रवन्ती-कल्पम् 'दन्तीद्रवन्तीकल्प' नामना अध्यायनुं 'दन्ती-

१८ मद्ये त्रयो—मद्यास्त्रयो (च.)

द्रवन्तीकल्प' नामके अध्यायका, व्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

भगवान् ભગવાન भगवान, आत्रेयः આત્રેયે आत्रेयने, इति ह આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, आह स्म કહેલું છે कहा है ॥ २ ॥

1. We shall now expound the chapter entitled 'The Pharmaceutics of the Red Physic nut and the Physic nut'.

2. Thus declared the worshipful Atreya.

दन्तीद्रवन्त्योः पर्यायाः —

**दन्त्युदुम्बरपर्णी स्यान्निकुम्भोऽथ मुकूलकः ।**
**द्रवन्ती नामतश्चित्रा न्यग्रोधी मूषिकाह्वया ॥ ३ ॥**
**(तथा मूषिकपर्णी चाप्युपचित्रा च शम्बरी ।**
**प्रत्यक्श्रेणी सुतश्रेणी दन्ती र(च)ण्डा च कीर्तिता ॥)**

उदुम्बरपर्णी ઉદુમ્બરપર્ણી उदुम्बरपर्णी, निकुम्भः નિકુંભ निकुंभ, अथ અને और, मुकूलकः મુકૂલક એ मुकूलक ये, दन्ती દંતીના પર્યાયો दन्तीके पर्याय, स्यात् છે हैं, चित्रा ચિત્રા चित्रा, न्यग्रोधी ન્યગ્રોધી न्यग्रोधी, मूषिकाह्वया મૂષિકાહ્વયા मूषिकाह्वया, तथा मूषिकपर्णी च अपि મૂષિકપર્ણી मूषिकपर्णी, उपचित्रा ઉપચિત્રા उपचित्रा, शम्बरी च શમ્બરી शम्बरी, प्रत्यक्श्रेणी પ્રત્યક્શ્રેણી प्रत्यक्श्रेणी, सुतश्रेणी સુતશ્રેણી सुतश्रेणी, दन्ती દન્તી दन्ती, रण्डा च અને રંડા और रण्डा, नामतः એ પર્યાયોથી इन पर्यायोंसे, द्रवन्ती દ્રવંતીને द्रवन्ती, कीर्तिता કહેવામાં આવે છે कही जाती है ॥ ३ ॥

3. Danti (red physic nut) is also known by its synonyms Udumbaraparni, Nikumbha and Mukoolaka. Dravanti (physic nut) is known also as Chitra, Nyagrodhi and Mushikahvaya. It is also known as Mushikaparni, Upachitra and *Sambari*, Pratyaksreni, Sutasreni, Danti and Randa(or Chanda).

दन्तीद्रवन्त्योः ग्राह्यमङ्गम्, प्रयोगविधिश्च—

**तयोर्मूलानि संगृह्य स्थिराणि बहलानि च ।**
**हस्तिदन्तप्रकाराणि श्यावताम्राणि बुद्धिमान् ॥ ४ ॥**
**पिप्पलीमधुलिप्तानि स्वेदयेन्मृत्कुशान्तरे ।**
**शोषयेदातपेऽग्न्यर्कौ हतो ह्येषां विकाशिताम् ॥ ५ ॥**

तयोः તે બન્નેના उन दोनोंकी, स्थिराणि કઠણ સારવાળી, बहलानि જાડી છાલનાં मोटी छालवाली, हस्तिदन्त- હાથીના દાંત हाथी दांतके, प्रकाराणि જેવાં समान, श्यावताम्राणि च ઈંટાડી તથા તાંબા જેવા વર્ણવાળાં श्याव तथा ताम्रवर्ण, मूलानि મૂળોનું जडोंको, संगृह्य ગ્રહણ કરી ग्रहणकर, बुद्धिमान् બુદ્ધિમાન વૈદ્યે बुद्धिमान वैद्य, पिप्पली- એઓ પર પીપર उनपर पीपर, मधु- અને મધનો और मधुका लिप्तानि લેપ કરી लेप कर, मृत्कुशान्तरे તેઓને દર્ભથી વીંટી માટીથી લીંપી દઈ उनको कुशाओंसे लपेटकर मिट्टीका लेप करके, स्वेदयेत् સ્વેદન કરવાં स्विन्न करे, आतपे અને તડકામાં और धूपमें, शोषयेत् સુકવવાં सुखावे, हि કારણકે क्योंकि, अग्न्यर्कौ અગ્નિ અને સૂર્ય अग्नि और सूर्य, एषाम् તેઓની इनके, विकाशिताम् વિકાશિતાનો विकाशी गुणको, हतः નાશ કરે છે नष्ट करते हैं ॥४-५॥

4-5. The wise physician should gather the roots of the red physic nut and the physic nut that are strong and thick and resemble in shape the elephant's tusk and are dark and coppery in color respectively. They should be smeared with long pepper and honey, covered with earth and sacrificial grass and subjected to sudation procedure. They should then be dried in the sun. Their toxic effects of causing paralysis is destroyed by the fire and the sun.

दन्तीद्रवन्त्योर्गुणाः —

**तीक्ष्णोष्णान्याशुकारीणि विकाशीनि गुरूणि च ।**
**विलापयन्ति दोषौ द्वौ मारुतं कोपयन्ति च ॥ ६ ॥**

४. हस्ति–दन्ति (ह.)
५. शोषयेदातपेऽग्न्यर्कौ -शोषयेदातपेऽर्काग्नी (ध. फ.)

of this evacuative enema, the patient should be given a diet of jangala meat-juices followed by an unctuous enema of oil prepared with the paste of red physic nut

बलां सरास्नां फलबिल्वचित्रकान्
द्विपञ्चमूलं कृतमालकात् फलम् ।
यवान् कुलत्थांश्च पचेज्जलाढके
रसः स पेष्यैस्तु कलिङ्गकादिभिः ॥३४॥
सतैलसर्पिर्गुडसैन्धवो हितः
सदातुराणां बलवर्णवर्धनः ।
तथाऽनुवास्ये मधुकेन साधितं
फलेन बिल्वेन शताह्वयाऽपि वा ॥३५॥

सरास्नाम् રાસ્ના रास्ना, बलाम् બલા बला, फल- મીંઢળ मेनफल, बिल्व- બીલી बेल, चित्रकान् ચિત્રક चित्रक, द्विपञ्चमूलम् દશમૂલ दशमूल, कृतमालकात् ગરમાળાની अमलतासकी, फलम् શીંગ फली, यवान् જવ जौ, कुलत्थान् च અને કળથીને और कुलथी इनको, जलाढके એક આઢક જલમાં २५६ तोले जलमें, पचेत् પકાવવાં पकावे, स रसः तु તે ક્વાથથી उस काथसे, कलिङ्गकादिभिः ઇન્દ્રજવ વગેરેના इन्द्रजौ आदिके, पेष्यैः કલ્ક સાથે कल्कके साथ, सतैलसर्पिः તેલ ઘી तैल घी, गुडसैन्धवः ગોળ અને સિંધાલૂણ સહિત તૈયાર કરવામાં આવેલી બસ્તિ गुड और सैन्धवके साथ तैयार की हुई बस्ति, सदा-आतुराणाम् સદાના રોગીઓ માટે सदाके रोगियोंके लिए, हितः હિતકર हितकर, बलवर्णवर्धनः અને બલ તથા વર્ણને વધારનાર છે और बल तथा वर्णका वर्धक है, तथा તેમજ एवं, मधुकेन- જેઠીમધ मुलहठी, फलेन મીંઢળ मेनफल, बिल्वेन- બીલી बेल, शताह्वयापि वा અથવા સુવાથી अथवा सोयासे, साधितम् સાધિત તેલ साधित तैल, अनुवास्ये અનુવાસનમાં હિતકર છે अनुवासनमें हितकर है ॥३४-३५॥

34-35. Decoct in 256 tolas of water sida Indian groundsel, emetic nut, bael, white flowered leadwort, the two varieties of penta-radices, the fruit of purging cassia, barley and horsegram. Add to this decoction the paste of the drugs of the kurchi group. This solution mixed with oil, ghee and rock-salt is beneficial to the eversick persons and is promotive of vitality and complexion. This should be followed by an unctuous enema prepared with liquorice, or bael fruit or dill seeds.

सजीवनीयस्तु रसोऽनुवासने
निरूहणे बालवणः शिशोर्हितः ।
न चान्यदाश्वग्निबलाभिवर्धनं
निरूहवस्तेः शिशुवृद्धयोः परम् ॥३६॥

सजीवनीयः तु જીવનીયગણના जीवनीयगणकी औषधियोंके, रसः ક્વાથથી સાધિત તેલ काथसे साधित तैल, अनुवासने અનુવાસનમાં अनुवासनमें, अलवणः च અને જીવનીયગણનો લવણરહિત ક્વાથ और जीवनीयगणका लवणरहित काथ, निरूहणे નિરૂહણમાં निरूहणमें, शिशोः બાળકને માટે बालकके लिए, हितः

३४ बलां सरास्नां—बलाञ्च रास्नां (ह.)
,, बलां सरास्नां फलबिल्वचित्रकान्—बलाश्वगंधासहबिल्व-चित्रकान् (ड.)
,, कृतमालकात् फलम्—कृतमालकोत्पले (ह. च. फ.)
,, ,, —कृतमालकत्फलम् (च फ.)
३५. सतैलसर्पिर्गुडसैन्धवो—सतैलसर्पिर्मधुसैन्धवो (च. फ.)
,, सदातुराणां बलवर्णवर्धनः—सदा नराणां बलवर्धनः परः (ख.)
,, बलवर्णवर्धनः—बलवर्धनः परः (म.)
,, तथाऽनुवास्ये मधुकेन साधितं—तथैव शस्तं मधुकेन साधितं (ह. ड.)
,, ,, ,, —तथाऽनुवास्याद् मधुकेन साधिताद (भ.)
,, तथाऽनुवास्ये—तथानुवास्यम् (ह.)
,, ,, —तथैव शस्तम् (ह ग.)
,, शताह्वयाऽपि—शताह्वयाऽथ (म.)

३६. चालवणः—चालवणः (च)

હિતકર છે हितकर है, शिशुवृद्धयोः બાળક અને વૃદ્ધ માટે बालक और वृद्धके लिए, आशु જલદી शीघ्र, अङ्ग-बल-अभिवर्धनम् અંગ અને બળ વધારવા अंग और बल बढ़ानेके लिए, निरूहबस्तेः નિરૂહબસ્તિથી निरूहबस्तिसे, परम् च શ્રેષ્ઠ श्रेष्ठ, अन्यत् न બીજું કંઈ નથી दूसरा कुछ नहीं है ॥ ३६ ॥

36. In the case of children, the unctuous enema prepared with the decoction of the drugs of the life-promoter group and the evacuative enema prepared with the same decoctions, and without the addition of salt, should be used. There is no therapeutic measure more rapidly promotive of bodily strength, for infants and the aged, than evacuative enema.

अध्यायोक्तविषयाः —

तत्र श्लोकः —

**फलकर्म बस्तिवरता नेत्रं यद्बस्तयो गवादीनाम् ।**
**सततातुराश्च दिष्टाः फलमात्रायां हितं चैषाम् ॥३७॥**

तत्र તે બાબતમાં उस विषयमें, श्लोकः ઉપસંહારનો શ્લોક છે કે उपसंहारका श्लोक है कि, फलमात्रायाम् ફલમાત્રાસિદ્ધિ અધ્યાયમાં फलमात्रासिद्धि अध्यायमें, फलकर्म ફલનું કર્મ फलका कर्म बस्तिवरता બસ્તિની શ્રેષ્ઠતા बस्तिकी श्रेष्ठता, गवादीनाम् ગાય વગેરે માટે गाय आदियोंके लिए, यत् नेत्रम् च જે બસ્તિનેત્ર जो बस्तिनेत्र, बस्तयः તથા બસ્તિઓ તે तथा बस्तियाँ वे, सततातुराः च અને સદાના રોગીઓ और सदाके रोगियों, दिष्टाः બતાવ્યા છે बतलाये गये हैं, एषाम् તેઓને માટે इनके लिए, हितम् च જે હિતકર છે, તે પણ બતાવ્યું છે जो हितकर है वह भी बतलाया गया है ॥ ३७ ॥

Here is the recapitulatory verse—

37. The actions of the various fruits and the fruit, par excellence, in enema; the length of the tube of the enema apparatus used in the case of animals; those who constitute the eversick class and what is beneficial for them—have all been described in this chapter on 'The successful use of the emetic nut and the dose of the enema'.

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलसंपूरिते सिद्धिस्थाने फलमात्रा-सिद्धिर्नामैकादशोऽध्यायः ॥ ११ ॥**

इति આ પ્રમાણે इस प्रकार, अग्निवेशकृते અગ્નિવેશે રચેલા अग्निवेशसे बनाये, चरकप्रतिसंस्कृते तन्त्रे અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, अप्राप्ते અપ્રાપ્ત अप्राप्त, दृढबलसंपूरिते અને દૃઢબલે પૂરા કરેલા और दृढबलसे पूरित किये गये, सिद्धिस्थाने સિદ્ધિસ્થાન વિષે सिद्धिस्थानमें, फलमात्रासिद्धिः 'ફલમાત્રાસિદ્ધિ' 'फलमात्रासिद्धि', नाम નામનો नामका, एकादशः અગિયારમો ग्यारहवाँ, अध्यायः અધ્યાય સંપૂર્ણ થયો अध्याय समाप्त हुआ ॥ ११ ॥

11. Thus, in the Section on Success in Treatment, in the treatise compiled by Agnivesa and revised by Caraka, the eleventh chapter entitled 'The successful use of emetic nut and the dose of the enema' not being available, the same as restored by Dridhabala, is completed

---

३७. बस्तिवरता नेत्रं यत्-बस्तिषु वरस्व निश्चयो (ख)
,, बस्तिवरता नेत्रं यद्बस्तयो गवादीनाम्-बस्ति वरतस्व निश्चयो वाज्यादीनाम् (ड.)
,, गवादीनाम्-गजादीनाम् (ख.)
,, दिष्टाः--दृष्टाः (ख, च)

## द्वादशोऽध्यायः ।

## બારમો અધ્યાય अध्याय बारहवाँ

## Chapter XII

उत्तरबस्तिसिद्धयुपक्रमः—

**अथात उत्तरबस्तिसिद्धिं व्याख्यास्यामः॥ १॥**

**इति ह स्माह भगवानात्रेयः ॥२॥**

**अथ अतः** હવે અહીંથી अब आगे, **उत्तरबस्तिसिद्धिम्** 'ઉત્તરબસ્તિસિદ્ધિ' નામના અધ્યાયનું 'उत्तरबस्तिसिद्धि' नामके अध्यायका, **व्याख्यास्यामः** વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

**भगवान्** ભગવાન भगवान, **आत्रेयः** આત્રેયે आत्रेयने, **इति ह** આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, **आह स्म** કહેલું છે कहा है ॥२॥

1. We shall now expound the chapter entitled "The Successful application of the remaining best kinds of enema".

2. Thus declared the worshipful Atreya.

वमनादिभिः शुद्धस्यातुरस्य परिपालनाप्रकारः—

**अथ खल्वातुरं वैद्यः संशुद्धं वमनादिभिः ।**
**दुर्बलं कृशमल्पाग्निं मुक्तसंधानबन्धनम् ॥ ३ ॥**
**निर्हृतानिलविण्मूत्रकफपित्तं कृशाशयम् ।**
**शून्यदेहं प्रतीकारासहिष्णुं परिपालयेत् ॥ ४ ॥**
**यथाऽण्डं तरुणं पूर्णं तैलपात्रं यथैव च ।**
**गोपाल इव दण्डी गाः सर्वस्मादपचारतः ॥ ५ ॥**

**अथ** હવે अब, **यथा** જેવી રીતે जैसे, **तरुणम्** નવા नये, **अण्डम्** ઈંડાનું अंडेका, **यथा एव च** તેમજ एवं, **पूर्णम्** છલોછલ ભરેલા पूर्ण भरे हुए, **तैलपात्रम्** તેલપાત્રનું રક્ષણ કરવામાં આવે છે तैलपात्रका रक्षण किया जाता है, **दण्डी** અને દંડધારી और दण्डधारी, **गोपालः** ગોવાલ गोपाल, **गाः इव** જેમ ગાયોનું રક્ષણ કરે છે जैसे गायोंका रक्षण करता है वैसे, **वैद्यः खलु** વૈદ્ય वैद्य, **वमनादिभिः** વમનાદિકથી वमनादिसे, **संशुद्धम्** શુદ્ધ થયેલ शुद्ध हुए, **दुर्बलम्** દુર્બળ दुर्बल, **कृशम्** કૃશ कृश, **अल्पाग्निम्** અલ્પ અગ્નિવાળા अल्पाग्नि, **मुक्तसंधानबन्धनम्** ઢીલા સાંધાવાળા और शिथिल संधियोंवाले, **निर्हृत-** બહાર કાઢવામાં આવેલા बाहर निकाले गये **अनिल-** વાયુ वायु, **विट्-** મળ मल, **मूत्र-** મૂત્ર मूत्र, **कफ-पित्तम्** કફ અને પિત્તવાળા कफ और पित्तवाले, **कृशाशयम्** કૃશ આશયવાળા कृश आशयवाले, **शून्यदेहम्** શૂન્ય શરીરવાળા शून्य शरीरवाले **प्रतीकार** અને પ્રતિકારને और प्रतिकार, **असहिष्णुम्** સહન ન કરી શકનાર રોગીને सहन न कर सकनेवाले रोगीको, **सर्वस्मात्** સઘળા सब प्रकारके, **अपचारतः** અપચારોથી अपचारोंसे, **परिपालयेत्** રક્ષવો જોઈએ बचाना चाहिए ॥ ३-५ ॥

3-5. When after being duly purified by the procedures of emesis etc,. the patient is in a debilitated condition, emaciated, weakeded in his digestive power, has his joints loosened, is purged of the morbid accumulations of flatus urine. mucus and bile the stomach and the intestines have become contracted, the body has become vacuous and accorningly unable to bear any further strain, he should be protected by the physician from all kinds of risk, just as a tender egg is protected or a vessel brimful of oil, or the kine by the cowherd armed with his staff

तस्याग्निसंधुक्षणार्थं पेयादिक्रमः—

**अग्निसंधुक्षणार्थं तु पूर्वं पेयादिना भिषक् ।**
**रसोत्तरेणोपचरेत् क्रमेण क्रमकोविदः ॥ ६ ॥**

३. कृशमल्पाग्निं–क्षाममंदाग्निं (ग.)
५. यथाऽण्डम्–यथै व (ख. ङ. द.)
,, यथैव च–तथैव च (ङ. ग.)
६. पेयादिना भिषक्–पेयादिभिर्भिषक् (ग.)
,, रसोत्तरेणोपचरेत्–रसोत्तरेणैव चरेत् (क)
,, उपचरेत् एव चरेत् (ङ.)

क्रमकोविदः ક્રમ જાણનાર क्रमज्ञानी, भिषक् વૈદ્ય वैद्य अग्निसंधुक्षणार्थम् અગ્નિ પ્રદીપ્ત કરવા માટે अग्निप्रदीप्त करनेके लिए. पूर्वम् तु પહેલાં તો प्रथम तो, पेयादिना પેયા વગેરેથી पेया आदिसे, रसोत्तरेण અને નિરૂહ પછી માંસરસપ્રધાન और निरूहके पश्चात् मांसरसप्रधान. क्रमेण ક્રમથી क्रमसे, उपचरेत् ઉપચાર કરવો જોઈએ उपचार करना चाहिए ॥ ६ ॥

6. The physician who is conversant with the order and sequence of therapeutic procedures, should put the patient on a liquid diet beginning with thin gruel and leading upto meat-juices, for the purpose of restimulating his gastric fire.

**स्निग्धाम्लस्वादुहृद्यानि ततोऽम्ललवणौ रसौ ।**
**स्वादुतिक्तौ ततो भूयः कषायकटुकौ ततः ॥ ७ ॥**
**अन्योऽन्यप्रत्यनीकानां रसानां स्निग्धरूक्षयोः ।**
**व्यत्यासादुपयोगेन प्रकृतिं गमयेद्भिषक् ॥ ८ ॥**

स्निग्ध- પહેલાં સ્નિગ્ધ स्निग्ध, अम्ल- અમ્લ अम्ल, स्वादु- તથા મધુર રસ तथा मधुर रस, हृद्यानि જે હૃદયને પ્રિય હોય તે આપવા जो हृदयको प्रिय होवे वे देने चाहिए, ततः પછી पीछे, अम्ललवणौ અમ્લ અને લવણ રસ अम्ल और लवण रस, ततः તે પછી उसके बाद, स्वादुतिक्तौ મધુર અને તિક્ત રસ मधुर और तिक्त रस, ततः भूयः અને તે પછી વળી तत्पश्चात् कषाय- કષાય कषाय, कटुकौ અને કટુ રસ દેવા कटु रस देवे, अन्योन्य- એક બીજાથી एक दूसरेसे, प्रत्यनीकानाम् વિરુદ્ધ विरुद्ध. रसानाम् રસોના ઉપયોગથી रसोंके उपयोगसे, स्निग्ध- અને સ્નિગ્ધ और स्निग्ध, रूक्षयोः તથા રૂક્ષના तथा रूक्षका, व्यत्यासात् પર્યાય ક્રમે पर्याय क्रमसे, उपयोगेन ઉપયોગથી उपयोगसे, भिषक् વૈદ્ય वैद्य, प्रकृतिम् રોગીને સ્વાભાવિક અવસ્થામાં रोगीको स्वाभाविक अवस्थामें, गमयेत् લાવવો ले आये ॥ ७-८ ॥

7-8. To this end, he should prescribe the use first, of unctuous, acid, sweet and pleasant articles, then of articles of acid and salt tastes, and later of sweet and bitter tastes, and last by of all articles of astringent and pungent tastes. In this manner by the use of two antagonistic tastes at a time, and by the alternate use of unctuous and dry articles. the physician should restore the patient to his normal health.

प्रकृतिमापन्नस्य लक्षणानि—

**सर्वक्षमो ह्यसंसर्गो रतियुक्तः स्थिरेन्द्रियः ।**
**बलवान् सत्त्वसंपन्नो विज्ञेयः प्रकृतिं गतः ॥ ९ ॥**

सर्वक्षमः સઘળા રસોને સહન કરનાર सब रसोंको सहन करनेवाले, असंसर्गः વેગોના નિરોધથી રહિત वेगरोधरहित, रतियुक्तः કાર્ય કરવામાં પ્રીતિયુક્ત कार्य करनेमें प्रीतियुक्त, स्थिरेन्द्रियः સ્થિર ઇન્દ્રિયવાળો स्थिर इन्द्रियवाले, बलवान् બળવાન बलवान, सत्त्वसंपन्नः हि અને મનોબળવાળા પુરુષને और मनोबलसे युक्त पुरुषको, प्रकृतिम् गतः સ્વાભાવિક સ્થિતિને પામેલો स्वाभाविक स्थितिमें आया, विज्ञेयः જાણવો जानना चाहिए ॥ ९ ॥

9 When the patient is able to tolerate all the tastes, when there is no retention of excretory matter when the zest for life has returned, the sense-organs have regained their firmness, when strength has returned and the mind is fully composed, it should be known that he is restored to normality.

---

९. सर्वक्षमः—कृतक्रमः (ग.)
,, सर्वक्षमो ह्यसंसर्गो रतियुक्तः—बलवान् वर्णवान् सर्वरसैः स्वस्थः (त. ग. म.)
,, ह्यसंसर्गो-निरातङ्को (ख. ग. ङ.)
,, सर्वक्षमो....प्रकृतिं गतः ॥ —बलवान् वर्णवान् सर्वरसैश्चासङ्ग एव च। स्थिरेन्द्रियः सर्वसहो विज्ञेयः प्रकृतिंगतः ॥(ब. ग.)
,, सर्वक्षमो ह्यसंसर्गो—कृतक्रमो निरातङ्को (क)

प्रकृतिमप्राप्तस्य वर्ज्यानि—

**एतां प्रकृतिमप्राप्तः सर्ववर्ज्यानि वर्जयेत् ।**
**महादोषकराण्यष्टाविमानि तु विशेषतः ॥१०॥**
**उच्चैर्भाष्यं रथक्षोभमतिचङ्क्रमणासने ।**
**अजीर्णाहितभोज्ये च दिवास्वप्नं समैथुनम् ॥११॥**

एताम् આ કહ, प्रकृतिम् સ્વાભાવિક અવસ્થાને स्वास्थ्यको, अप्राप्तः નહિ પામેલા મનુષ્યે न प्राप्त हुआ मनुष्य, सर्ववर्ज्यानि તજવા લાયક સર્વ વસ્તુઓને। सब त्याज्य वस्तुओंका, वर्जयेत् ત્યાગ કરવો જોઈએ त्याग करना चाहिए, उच्चैर्भाष्यम् ઊંચે સાદે બોલવું ऊंचा बोलना; रथक्षोभम् રથનો હડદોલો रथसंक्षोभ, अतिचङ्क्रमण- અતિશય ફરવું बहुत घूमना, आसने અતિશય બેસી રહેવું बहुत बैठा रहना, अजीर्ण- અજીર્ણ પર ભોજન अजीर्ण पर भोजन, अहित- અહિત अपथ्य, भोज्ये च ભોજન भोजन, समैथुनम् મૈથુન मैथुन, दिवास्वप्नम् અને દિવસની નિદ્રા तथा दिवास्वप्न, इमानि આ इन, महादोषकराणि મહાદોષ કરનારી महादोष करनेवाले, अष्टौ तु આઠ બાબતોનો तो आठ बातोंका तो, विशेषतः ખાસ કરીને ત્યાગ કરવો જોઈએ विशेष करके त्याग करना चाहिए ॥१०-११॥

10-11. So long as the patient has not regained such full measure of health, he should scrupulously avoid all things and activities that are prohibited. He should be particularly careful to eschew the following eight factors which are highly causative of morbidity; loud speaking, jolting in conveyances, excessive moving about and excessive sedentation, indigestion and pre-digestion meals, day-sleep and and the sex act.

वर्ज्यसेवनजा व्याधयः—

**तज्जा देहोर्ध्वसर्वाधोमध्यपीडामदोषजाः ।**
**श्लेष्मजाः क्षयजाश्चैव व्याधयः स्युर्यथाक्रमम् ॥१२॥**

तज्जाः તેઓથી થતા उनसे होनेवाले, देहोर्ध्व ઉર્ધ્વદેહના રોગો ऊर्ध्वदेहके रोग, सर्व- આખા શરીરના રોગો सम्पूर्ण शरीरके रोग, अधः- શરીરના નીચેના ભાગના રોગો शरीरके नीचेके भागके रोग, मध्यपीडा- શરીરના મધ્યભાગના રોગો शरीरके मध्य भागके रोग, आमदोषजा આમદોષથી ઉત્પન્ન आमदोषजन्य, श्लेष्मजाः કફથી ઉત્પન્ન कफजन्य, क्षयजाः च एव અને ક્ષયથી ઉત્પન્ન और क्षयजन्य, व्याधयः રોગો रोग, यथाक्रमम् स्युः અનુક્રમે થાય છે क्रमशः होते हैं ॥ १२ ॥

12. Indulgence in these things gives rise successively to pain affecting the upper part of the body, pain affecting the whole body, pain affecting the lower part of the body, pain affecting the middle part of the body, chyme disorders, disorders of morbid accumulations of kapha and disorders born of wasting.

तेषां विस्तरतो व्याख्यानप्रतिज्ञा—

**तेषां विस्तरतो लिङ्गमेकैकस्य च भेषजम् ।**
**यथावत्संप्रवक्ष्यामि सिद्धान् बस्तींश्च यापनान् ॥१३॥**

तेषाम् તેઓમાંથી उनमेंसे, एकैकस्य દરેકનાં प्रत्येकके, लिङ्गम् લક્ષણ लक्षण, भेषजम् च ચિકિત્સા चिकित्सा, सिद्धान् તથા સિદ્ધ तथा सिद्ध, यापनान् યાપન यापन, बस्तींश्च બસ્તિઓને बस्तियोंको, यथावत् સમ્યક્ રૂપથી सम्यक् रूपसे, विस्तरतः વિસ્તારથી विस्तारसे, संप्रवक्ष्यामि કહીશ कहूंगा ॥ १३ ॥

13. I shall now describe the symptoms of these various disorders, in extenso, and the appropriate remedy for each of them as also the tried recipes of the longerity-promoting yapana-enema.

१३. च भेषजम् समेषजम् (ग.)

उच्चैर्भाष्यातिभाष्यजा व्यापदः —

**तत्रोच्चैर्भाष्यातिभाष्याभ्यां शिरस्तापशङ्खकर्णनिस्तोदश्रोत्रोपरोधमुखतालुकण्ठशोषतैमिर्यपिपासाज्वरतमकहनुग्रहमन्यास्तम्भनिष्ठीवनोरःपार्श्वशूलस्वरभेदहिक्काश्वासादयः स्युः (१);**

**तत्र** તેમાં उनमें, **उच्चैर्भाष्य-** ઊંચેથી બોલવાથી ऊंचा बोलनेसे, **अतिभाष्याभ्याम्** तथा બહુ બોલવાથી तथा बहुत बोलनेसे, **शिरस्ताप-** શિરસ્તાપ शिरमें संताप, **शङ्खकर्ण-** શંખ અને કાનમાં शङ्ख और कानोंमें, **निस्तोद-** તોદ तोद, **श्रोत्रोपरोध-** કાનનો ઉપરોધ बधिरता, **मुखतालु-** મોઢા, તાળવા मुख, तालु, **कण्ठशोष-** તથા ગળાનો શોષ तथा गलेका शोष, **तैमिर्य-** તિમિર तिमिर, **पिपासाज्वर-** તરસ, જ્વર प्यास, ज्वर **तमक-** તમક तमक, **हनुग्रह-** હનુગ્રહ हनुग्रह, **मन्यास्तम्भ-** મન્યાસ્તંભ मन्यास्तम्भ, **निष्ठीवन-** નિષ્ઠીવન निष्ठीवन **उरः** છાતી छाती, **पार्श्वशूल** તથા પડખાંમાં શૂલ तथा पार्श्वोंमें शूल, **स्वरभेद-** સ્વરભેદ स्वरभेद, **हिक्का-** હેડકી हिक्का, **श्वासादयः** શ્વાસ વગેરે श्वास आदि, **स्युः** થાય છે होते हैं;

14-(1). The following complications result from talking too loudly or in excess:-burning sensation in the head, pricking pain in the temples and the ears, auditory dysfunction, parching of the mouth, pallate and the throat, faintness, thirst, fever, asthmatic dyspnea, spastic condition of the jaws and the sides of the neck, ptyalism, acute pain in the front and sides of the chest, change of voice, hiccup, dyspnea and other similar conditions.

रथक्षोभजा व्यापदः —

**रथक्षोभात् संधिपर्वशैथिल्यहनुनासाकर्णशिरःशूलतोदकुक्षिक्षोभाटोपान्त्रकूजनाध्मानहृदयेन्द्रियोपरोधस्फिक्पार्श्ववंक्षणवृषणकटीपृष्ठवेदनासंधिस्कन्धग्रीवादौर्बल्याङ्गाभितापपादशोफप्रस्वापहर्षणादयः (२);**

**रथक्षोभात्** રથક્ષોભથી रथक्षोभसे **संधिपर्वशैथिल्य-** સાંધા તથા પર્વોની શિથિલતા संधि तथा पर्वोकी शिथिलता, **हनु-** હનુ हनु, **नासा-** નાક नासा, **कर्ण-** કાન कान, **शिरःशूल-** તથા માથામાં શૂલ और शिरमें शूल, **तोद-** તોદ तोद, **कुक्षिक्षोभ-** કુક્ષિક્ષોભ कुक्षिक्षोभ, **आटोप-** આટોપ आटोप, **अन्त्रकूजन** આંતરડામાં અવાજ अन्त्रकूजन, **आध्मान-** આધ્માન आध्मान, **हृदय-** હૃદય हृदय, **इन्द्रिय-** તથા ઇન્દ્રિયોનો तथा इन्द्रियोंका, **उपरोध** ઉપરોધ उपरोध, **स्फिक्-** નિતંબ नितम्ब, **पार्श्व-** પડખાં पार्श्व, **वंक्षण-** વંક્ષણ वंक्षण, **वृषण-** વૃષણ वृषण, **कटी-** કેડ कटि, **पृष्ठवेदना-** અને વાંસામાં વેદના और पीठमें वेदना, **संधि-** તેમજ સાંધા एवं संधि, **स्कन्ध-** ખભા कन्धे, **ग्रीवादौर्बल्य-** તથા ગર્દનની નિર્બલતા तथा ग्रीवाकी दुर्बलता, **अङ्गाभिताप-** અંગોનો અભિતાપ अंगोंका अभिताप, **पादशोफ-** અને પગના સોજા और पैरोंमें सूजन, **प्रस्वाप-** સ્પર્શજ્ઞાનનો નાશ सुप्ति, **हर्षणादयः** તથા હર્ષ વગેરે થાય છે तथा पादहर्ष आदि होते हैं ॥ २ ॥

14-(2). From jolting suffered while travelling in conveyaces, the following disorders arise—flabbiness of the bigger and smaller joints, acute pricking pain in the jaw, nose, ear and the head, disturbance in the abdomen, meteorism,

१४ (१) श्रोत्रोपरोध-श्रोत्रोपरोध (क. ड. ङ.)
,, शङ्खकर्णनिस्तोद-शङ्खनिस्तोद (ध.)
,, हनुग्रहमन्यास्तम्भ-हनुमन्याग्रह (ध.)
,, मन्यास्तम्भनिष्ठीवनोरः-मन्याग्रहनिष्ठीवनोरः (ख.)
,, निष्ठीवनोरःपार्श्वशूल-निष्ठीवनशिरःपार्श्वशूल (ध.)

१४ (२). कुक्षिक्षोभ-वक्षिक्षोभ (क.)
,, आध्मानहृदयेन्द्रियोपरोध-आध्मानेन्द्रियोपरोध (ध.)
,, संधिस्कन्ध-सक्थिस्कन्ध (क.)
,, स्कन्धग्रीवा-स्कन्धहनुग्रीवा (क. ड.)
,, स्कन्धग्रीवा-स्कन्धहनुग्रीवा (ख.)
,, ,, -सक्थिस्कन्धहनुग्रीवा (ध.)

intestinal gurgling, distension, disordered function of the heart and the sense-organs; and pain in the hip, sides, groin scrotum, waist and back, asthenia of the joints shoulders and neck, burning in the limbs, edema, anaesthesia and hyperesthesia of the feet and other similar conditions.

अतिचङ्क्रमणजा व्यापदः —

**अतिचङ्क्रमणात् पादजङ्घोरुजानुवङ्क्षणश्रोणीपृष्ठशूलसक्थिसादनिस्तोदपिण्डिकोद्वेष्टनाङ्गमर्दांसाभितापसिराधमनीहर्षश्वासकासादयः (३);**

**अतिचङ्क्रमणात्** બહુ ફરવાથી बहुत घूमनेसे, **पाद-** પગ पैर **जङ्घा-** પીંડી जङ्घा, **ऊरु-** સાથળ ऊरु, **जानु-** ઢીંચણ जानु, **वङ्क्षण-** વંક્ષણ वङ्क्षण, **श्रोणी-** શ્રોણિ श्रोणि, **पृष्ठशूल** તથા બરડામાં શૂલ तथा पीठमें शूल, **सक्थिसाद-** તેમજ સક્થિસાદ एवं सक्थिसाद, **निस्तोद-** સક્થિતોદ निस्तोद, **पिण्डिकोद्वेष्टन-** પીંડીઓમાં ઉદ્વેષ્ટન पिण्डलियोंमें उद्वेष्टन, **अङ्गमर्द-** અંગમર્દ अङ्गमर्द, **अंसाभिताप-** અંસાભિતાપ अंसाभिताप, **सिरा-** સિરા सिरा, **धमनीहर्ष-** તથા ધમનીઓનો હર્ષ तथा धमनीयोंका हर्ष, **श्वासकासादयः** અને શ્વાસ કાસ વગેરે થાય છે और श्वास कासादि होते हैं (३);

14-(3). From excessive moving about, the following disorders arise—pain in the feet, calves, thighs knees, groin, waist and back; flabbiness and pain in the legs, cramps in the calves body-aches, burning pain in the shoulders, acceleration of the arteries and the veins, dyspnea, cough and other similar conditions.

अत्यासनजा व्यापदः —

**अत्यासनात्तु रथक्षोभजाः स्फिक्पार्श्ववङ्क्षणवृषणकटीपृष्ठवेदनादयः (४);**

**अत्यासनात्** બહુ બેસી રહેવાથી बहुत बैठनेसे, **रथक्षोभजाः** રથક્ષોભથી થતા रथक्षोभजन्य, **स्फिक्-** સ્ફિક્ स्फिक्, **पार्श्व-** પડખાં पार्श्व, **वङ्क्षण-** વંક્ષણ वंक्षण, **वृषण-** વૃષણ वृषण, **कटी-** કેડ कटि, **पृष्ठ-** તથા બરડાની तथा पृष्ठकी, **वेदनादयः** વેદના વગેરે થાય છે वेदना आदि होते हैं ॥ ४ ॥

14-(4). From luxus sedentation, the disorders described as occuring from excessive jolting, arise; as for example, pain in the hips, sides, groin, scrotum, waist and back and the rest.

अजीर्णाध्यशनजा व्यापदः —

**अजीर्णाध्यशनाभ्यां तु मुखशोषाध्मानशूलनिस्तोदपिपासागात्रसादच्छर्द्यतीसारमूर्च्छाज्वरप्रवाहणामविषादयः (५);**

**अजीर्णाध्यशनाभ्याम् तु** અજીર્ણ તથા અધ્યશનથી अजीर्ण और अध्यशनसे, **मुखशोष-** મુખશોષ मुखशोष, **आध्मान-** આધ્માન आध्मान, **शूल-** શૂલ शूल, **निस्तोद-** નિસ્તોદ निस्तोद, **पिपासा-** તરસ प्यास, **गात्रसाद-** અંગસાદ अंगसाद, **छर्दि-** ઊલટી वमन, **अतीसार-** અતિસાર अतिसार, **मूर्च्छा-** મૂર્ચ્છા मूर्च्छा, **ज्वर-** જ્વર ज्वर, **प्रवाहण-** પ્રવાહણ प्रवाहिका, **आमविषादयः** અને આમવિષાદિ રોગો થાય છે और आमविषादिरोग होते हैं ॥ ५ ॥

15-(5). From indigestion and taking of predigestion meals, the following disorders arise:—dryness of the mouth, distension of the abdomen, colicky or pricking pain in the abdomen, thirst, asthenia of the limbs, vomiting, diarrhea,

१४-(३) शूलसक्थि—शूलच्छर्दिसक्थि (क)
,, सक्थिसाद—छर्दिसाद (क)

१४-(४) वेदनादयः—वेदनादयः स्युः (क)

fainting, fever, dysenteric condition, chyme-toxemia and similar conditions.

विषमाहिताशनजा व्यापदः—

**विषमाहिताशनाभ्यामनन्नाभिलाषदौर्बल्यवैवर्ण्यकण्डूपामागात्रावसादवातादिप्रकोपजाश्च ग्रहण्यर्शोविकारादयः (६);**

**विषमाहित-** વિષમ તથા અહિત विषम तथा अहित, **अशनाभ्याम्** ભોજનથી भोजनसे, **अनन्नाभिलाष-** અન્નની ઇચ્છા ન થવી अन्नकी अनिच्छा, **दौर्बल्य-** દુર્બલતા दुर्बलता, **वैवर्ण्य-** વિવર્ણતા विवर्णता, **कण्डू-** ખરજ खुजली **पामा-** પામા पामा, **गात्रावसाद-** ગાત્રોનો અવસાદ गात्रोंकी शिथिलता, **वातादि-** અને વાત આદિના वातादिके, **प्रकोपजाः च** પ્રકોપથી થનારા प्रकोपसे होनेवाले, **ग्रहणी-** સંગ્રહણી संग्रहणी, **अर्शोविकारादयः** અર્શ વગેરે થાય છે अर्शःप्रभृति होते हैं (६);

14-(6). From eating irregular and unwholesome meals, the following disorders arise—inappetance, debility, discoloration, pruritus, asthenia of the limbs, assimilation-disorders and piles due to the morbidity of vata and other humors, skin eruption and similar conditions.

दिवास्वप्नजा व्यापदः—

**दिवास्वप्नादरोचकाविपाकाग्निनाशस्तैमित्यपाण्डुत्वकण्डूपामादाहच्छर्द्यङ्गमर्दहृत्स्तम्भजाड्यतन्द्रानिद्राप्रसङ्गग्रन्थिजन्मदौर्बल्यरक्तमूत्राक्षिताताल्‍लुलेपाः (७);**

**दिवास्वप्नात्** દિવસે ઊંઘવાથી दिवा स्वप्नसे **अरोचक-** અરુચિ अरुचि, **अविपाक-** અવિપાક अविपाक, **अग्निनाश-** અગ્નિનાશ अग्निनाश, **स्तैमित्य-** સ્તિમિતતા स्तिमितता, **पाण्डुत्व-** પાંડુતા पांडुता, **कण्डू-** ખરજ कण्डू, **पामा-** પામા पामा, **दाह-** દાહ दाह, **छर्दि-** ઊલટી वमन, **अङ्गमर्द-** અંગમર્દ अंगमर्द, **हृत्स्तम्भ-** હૃદયસ્તંભ हृदयस्तम्भ, **जाड्य-** જડતા जडता, **तन्द्रा-** તન્દ્રા तन्द्रा, **निद्राप्रसङ्ग** ઊંઘ્યા કરવું निद्रासातत्य, **ग्रन्थिजन्म-** ગ્રન્થિનો જન્મ ग्रन्थिका उत्पन्न होना, **दौर्बल्य-** દુર્બળતા दुर्बलता, **रक्तमूत्राक्षिता** મૂત્ર તથા આંખો રાતી થવી मूत्र तथा आंखोंका रक्त होना, **तालुलेपाः** અને તાળવાનો ઉપલેપ और तालुमें उपलेप होता है ॥ ७ ॥

14-(7). From indulgence in day-sleep, the following disorders arise—anorexia, indigestion, loss of digestive power, stiffness, pallor, pruritus, eruption, burning, vomiting, body-ache, rigidity of the cardiac region, dullness torpor, somnolence formation of swellings, debility, red coloration of the urine and the eyes, and coating of the palate.

व्यवायजा व्यापदः—

**व्यवायादाशुबलनाशोरुसादशिरोबस्तिगुदमेढ्रवंक्षणोरुजानुजङ्घापादशूलहृदयस्पन्दननेत्रपीडाङ्गशैथिल्यशुक्रमार्गशोणितागमनकासश्वासशोणितष्ठीवनस्वरावसादकटीदौर्बल्यैकाङ्ग-सर्वाङ्ग-रोगमुष्कश्वयथुवातवर्चोमूत्रसङ्गशुक्रविसर्गजाड्यवेपथु-बाधिर्यविषादादयः स्युः; अवलुप्यत इव गुदः, ताड्यत इव मेढ्रम्, अवसीदतीव मनो, वेपते हृदयं, पीड्यन्ते सन्धयः, तमः प्रवेश्यत इव च (८);**

---

१४-(६). दौर्बल्यवैवर्ण्यकण्डू-दौर्बल्यकण्डू (थ.)

१४-(७). तालुलेपा.—तालुप्रलेपाः पिपासा च (क. ख.)

,, ,, —तालुलेपाः पिपासा च (छ. झ. ढ. त.)

१४-(८). आशुबलनाश—द्रवबलनाश (ग.)

,, बलनाशो—बलसादो (घ)

,, वंक्षणोरुजानुजङ्घा—वंक्षणोरुस्तम्भवृषणजानुजङ्घा (थ.)

,, ष्ठीवनस्वरावसाद—ष्ठीवनबलस्वरावसाद (द.)

,, अवलुप्यत इव—उत्पाट्यत इव (क घ. छ. ड.)

,, अवलुप्यत इव गुदः ताड्यत इव मेढ्रम्—उत्पाट्यत इव गुदस्ताड्यत इव मेढ्रम् (क.)

,, ताड्यत इव—ताम्यतीव (क)

,, प्रवेश्यत प्रविशति (ड.)

**व्यवायात्** मैथुनथी मैथुनसे, **आशुबलनाश-** બળનો **શીઘ્ર**નાશ बलका शीघ्रनाश, **ऊरुसाद-** સાથળમાં પીડા ऊरुसाद, **शिरः** માથું शिर, **बस्ति-** બસ્તિ वस्ति, **गुद-** ગુદા गुदा, **मेढ्र-** ઉપસ્થ उपस्थ, **वङ्क्षण-** વંક્ષણ वंक्षण, **ऊरु-** સાથળ ऊरु, **जानु-** ઢીંચણ जानु, **जङ्घा-** પીંડી **जङ्घा, पादशूल-** તથા પગનું શૂળ तथा पैरोंमें शूल, **हृदयस्पन्दन-** હૃદયના ધબકારા हृदयका स्पन्दन, **नेत्रपीडा-** આંખની પીડા आंखकी पीडा, **अङ्गशैथिल्य-** અંગો શિથિલ થવાં अङ्गोंकी शिथिलता, **शुक्रमार्ग-** શુક્રના માર્ગમાંથી **शुक्रके मार्गसे, शोणितागमन-** રક્તનું આવવું **खूनका** आना, **कास-** કાસ कास, **श्वास-** શ્વાસ श्वास, **शोणितष्ठीवन-** થૂંકમાં લોહી પડવું थूंकमें रक्तका आना, **स्वरावसाद-** સ્વર બેસી જવો स्वरकी शिथिलता, **कटीदौर्बल्य-** કેડની અશક્તિ कटीदौर्बल्य, **एकाङ्ग-** એક અંગમાં થનાર एकांग, **सर्वाङ्गरोग-** કે આખા શરીરમાં થનાર રોગ या सर्वाङ्ग रोग, **मुष्कश्वयथु-** વૃષણનો સોજો वृषणोंमें शोथ, **वात-** અધોવાયુ अधोवायु, **वर्चः-** મળ पुरीष, **मूत्रसङ्ग-** તથા મૂત્રની અટકાયત तथा मूत्रकी रुकावट, **शुक्रविसर्ग-** શુક્રનો વિસર્ગ शुक्रका क्षरण, **जाड्यवेपथु-** જડતા, ધ્રૂજારી जडता, कम्पन, **बाधिर्य-** બહેરાપણું वधिरता, **विषादादयः** વિષાદ વગેરે विषाद आदि, **स्युः** થાય છે होते हैं, **गुदः** ગુદામાં गुदा, **अवलुप्यत इव** છેદન જેવી પીડા થાય છે मानो टुकडे हो जाती है, **मेढ्रम्** ઉપસ્થમાં उपस्थमें, **ताड्यत इव** તાડન જેવી પીડા થાયછે चोट लगनेसी पीडा होती है, **मनः** મન मन, **अवसीदति** શિથિલ પડતું હોય તેમ થાય છે शिथिलसा होता है, **हृदयम्** હૃદય हृदय, **वेपते** કંપે છે कांपता है, **सन्धयः** સંધિઓમાં सन्धियोंमें, **पीड्यन्ते** પીડા पीडा, **तमः च** અને અંધારાં और अंधेरा, **प्रवेश्यते इव** આવતાં હોય એવું થાય છે छा जाता है ॥ ८ ॥

14.(8). From indulgence in sex, the following disorders arise:—rapid loss of the vitality, flabbiness of the thighs, pain in the head, bladder, rectum, phallus, groin, thigh, knee, calf and feet, palpitation of the heart, pain in the eyes, debility of the body discharge of blood through the seminal passages, cough, dyspnea, blood in expectoration, asthenia of the voice weakness of the waist, affections of one or all the limbs of the body, swelling of the scrotum. retention of flatus, feces and urine and semen, dullness tremor deafness, mental depression and similar conditions; the patient feels as though his rectum is being cut, his phallus is becoming smaller his mind were sinking, his heart were trembling, his joints were being squeezed and as though he were about to faint.

**इत्येतमेभिरष्टभिरपचारैरेते प्रादुर्भवन्त्युपद्रवाः ॥ १४ ॥**

**इति एवम्** એમ ऐसे, **अष्टभिः** આઠ आठ, **अपचारैः** અપચારોથી अपचारोंसे, **एते** આ ये. **उपद्रवाः** ઉપદ્રવો उपद्रव, **प्रादुर्भवन्ति** પેદા થાય છે होते हैं ॥ १४ ॥

14. Thus have been described the various kinds of disorders arising from these eight violations of the rules of behaviour for the convalescent.

उच्चैर्भाष्यातिभाष्यजानां व्यापदां चिकित्सा—

**तेषां सिद्धिः—तत्रोच्चैर्भाष्यातिभाष्यजानामभ्यङ्गस्वेदोपनाहधूमनस्योपरिभक्तस्नेहपानरसक्षीरादिरनिलहरः सर्वो विधिर्मौनं च (१);**

तेषाम् ते રોગોની उन रोगोंकी, **सिद्धिः** ચિકિત્સા चिकित्सा, **तत्र** તેમાં उनमें, **उच्चैर्भाष्य-** ઊંચેથી બોલવાથી ऊंचा बोलनेसे, **अतिभाष्यजानाम्** તથા બહુ બોલવાથી થયેલા રોગોમાં तथा बहुत बोलनेसे उत्पन्न

१५०(१). तत्रोच्चैर्भाष्य उच्चैर्भाष्य (क)

रोगोंमें. अभ्यङ्ग- અભ્યંગ अभ्यंग, स्वेद- સ્વેદન स्वेद, उपनाह- ઉપનાહ उपनाह. धूम ધૂમપાન धूमपान, नस्य- નસ્યકર્મ नस्यकर्म, उपरिभक्त ભોજન બાદ भोजनके बाद, स्नेहपान સ્નેહપાન स्नेहपान, रसक्षीरादिः માંસ રસ દૂધ વગેરે मांसरस दूध आदि, वातहरः વાતઘ્ન वातघ्न, सर्वः विधिः સર્વ વિધિ सब विधि, मौनम् च તથા મૌન ચિકિત્સા છે तथा मौन चिकित्सा है ॥१॥

15-(1). Now we shall describe the treatment in these disorders. In disorders due to loud or excessive talking, the following remedial measures are indicated—inunction, sudation poultices, smoking nasal medications. post-prandial potions of unctuous articles, meat-juice, milk and all measures curative of vata; and lastly the observance of silence.

रथक्षोभातिचङ्क्रमणात्यासनजानां व्यापदां चिकित्सा—

**रथक्षोभातिचङ्क्रमणात्यासनजानां स्नेहस्वेदादि वातहरं कर्म सर्वं निदानवर्जनं च (२);**

रथक्षोभ- રથક્ષોભથી रथक्षोभसे, अति चङ्क्रमण- બહુ ફરવાથી बहुत फिरनेसे, अत्यासनजानाम् तथा બહુ બેસી રહેવાથી થયેલા રોગોમાં तथा अधिक बैठा रहनेसे उत्पन्न हुए रोगोंमें, स्नेह સ્નેહન स्नेहन, स्वेदादि સ્વેદન વગેરે स्वेदन आदि, वातहरम् વાતઘ્ન वातघ्न, कर्म- કર્મ कर्म, सर्वम् તથા સર્વ तथा सब, निदान તથા નિદાનનો निदानका, वर्जनम् च ત્યાગ ચિકિત્સા છે त्याग चिकित्सा है ॥२॥

15-(2). In disorders due to jolting in carriages or to excessive moving about, or to excessive sedentation the following remedial measures are indicated—oleation, sudation etc. all measures curative of vata and avoidance of the causative factors.

अजीर्णाध्यशनजानां व्यापदां चिकित्सा—

**अजीर्णाध्यशनजानां निरवशेषतश्छर्दनं रूक्षः स्वेदो लङ्घनीयपाचनीयदीपनीयौषधावचारणं च (३);**

अजीर्ण- અજીર્ણ अजीर्ण, अध्यशनजानाम् તથા અધ્યશનથી થયેલા રોગોમાં तथा अध्यशनजन्य रोगोंमें, निरवशेषतः અપક્વ અન્ન ન રહે ત્યાં સુધી सब अजीर्ण अन्नका, छर्दनम् વમન वमन, रूक्षः રૂક્ષ रूक्ष, स्वेद સ્વેદ स्वेद, लङ्घनीय- લંઘનીય लंघनीय, पाचनीय- પાચનીય पाचनीय, दीपनीय- તથા દીપનીય दीपनीय, औषध- ઔષધોનો औषधोंका, अवचारणम् च પ્રયોગ ચિકિત્સા છે प्रयोग चिकित्सा है ॥ ३ ॥

15-(3). In disorders due to indigestion or predigestion meals, the remedial measures indicated are complete emesis, dry sudation. lightening therapy and the use of digestive and digestive-stimulant medications.

विषमाहिताशनजानां व्यापदां चिकित्सा—

**विषमाहिताशनजानां यथास्वं दोषहराः क्रियाः (४);**

विषम- વિષમ विषम, अहित- તથા અહિત तथा अहित, अशनजानाम् અશનથી થયેલ રોગોમાં अशन जन्य रोगोंमें यथास्वम् તે તે દોષને અનુસરી उस उस दोषके अनुसार, दोषहराः દોષને હરનાર दोषहर, क्रियाः ચિકિત્સા કરવી જોઈએ चिकित्सा करनी चाहिए ॥ ४ ॥

15-(4). In morbid conditions due to irregular or unwholesome dietary, the line of treatment should be curative of the morbidity concerned.

दिवास्वप्नजानां व्यापदां चिकित्सा—

**दिवास्वप्नजानां धूमपानलङ्घनवमनशिरोविरेचनव्यायामरूक्षाशनारिष्टदीपनीयौषधोपयोगः प्रघर्षणोन्मर्दनपरिषेचनादिश्च श्लेष्महरः सर्वो विधिः(५);**

---

१५-(३). स्वेदो—स्वेदधूमपानं (न. द. च)

१५-(५). प्रघर्षणो—प्रकर्षणो (ख. ङ. त)

**दिवास्वप्नजानाम्** દિવસે સુવાથી થયેલા રોગોમાં **दिवास्वप्नजन्य** रोगोंमें, **धूमपान-** ધૂમપાન धूमपान, **लङ्घन-** ઉપવાસ उपवास, **वमन-** વમન वमन, **शिरोविरेचन-** શિરોવિરેચન शिरोविरेचन, **व्यायाम-** કસરત व्यायाम, **रूक्षाशन** રૂક્ષ ભોજન रूक्ष भोजन, **अरिष्ट-** અરિષ્ટ अरिष्ट, **दीपनीय-** દીપનીય दीपनीय, **औषधोपयोगः** ઔષધોનો ઉપયોગ औषधोंका उपयोग, **प्रघर्षण** પ્રઘર્ષણ प्रघर्षण, **उन्मर्दन** ઉન્મર્દન उन्मर्दन, **परिषेचनादिः च** અને પરિષેચન વગેરે और परिषेचन आदि, **श्लेष्महरः** કફહર कफहर, **सर्वः** સઘળી सब, **विधिः** વિધિ ચિકિત્સા છે विधि चिकित्सा है ॥५॥

15 (5). In dsorders arising from day-sleep, the remedial means indicated are smoking, lightening therapy, emesis, errhines, exercise dry articles of food, medicated wines and the use of digestive-stimulant medications, friction massage shampoo affusions etc, and all measures curative of kapha.

व्यवायजानां વ્યાપદાં चिकित्सा—

**मैथुनजानां जीवनीयसिद्धयोः क्षीरसर्पिषोरुपयोगः, तथा वातहराः स्वेदाभ्यङ्गोपनाहा वृष्याश्चाहाराः स्नेहाः स्नेहविधयो यापनाबस्तयोऽनुवासनं च; मूत्रवैकृतवस्तिशूलेषु चोत्तरवस्तिर्विदारीगन्धादिगणजीवनीयक्षीरसंसिद्धं तैलं स्यात् ॥१५॥**

**मैथुनजानाम्** મૈથુનથી થયેલા રોગોમાં मैथुनजन्य रोगोंमें **जीवनीय-** જીવનીય ગણના દ્રવ્યોથી जीवनीयगणसे, **सिद्धयोः** પકાવેલ पकाये हुए, **क्षीर-** દૂધ दूध, **सर्पिषोः** તથા ઘીનો तथा घीका, **उपयोगः** ઉપયોગ उपयोग, **तथा वातहराः** વાતઘ્ન वातघ्न, **स्वेद-** સ્વેદન स्वेदन, **अभ्यङ्ग-** અભ્યંગ अभ्यंग, **उपनाहाः** ઉપનાહો एवं उपनाह, **वृष्याः** વૃષ્ય वृष्य, **आहाराः च** આહાર आहार, **स्नेहाः** સ્નેહ स्नेह, **स्नेहविधयः** સ્નેહવિધિ स्नेहविधि, **यापनाबस्तयः** યાપનબસ્તિઓ यापनवस्तियाँ, **अनुवासनम् च** અને અનુવાસનબસ્તિ ચિકિત્સા છે और अनुवासनवस्ति चिकित्सा है, **मूत्र-वैकृत** મૂત્રના રોગો તથા मूत्रविकार **वस्तिशूलेषु च** તથા બસ્તિના શૂલમાં तथा वस्तिके शूलमें, **उत्तरबस्तिः** ઉત્તરબસ્તિ उत्तरवस्ति, **विदारीगन्धादिगण-** વિદારીગન્ધાદિગણ विदारीगन्धादिगण, **जीवनीय-** તથા જીવનીયગણના દ્રવ્યોથી तथा जीवनीयगणके द्रव्योंसे, **क्षीर-संसिद्धम्** દૂધ વડે પકાવેલું क्षीरसे सिद्ध, **तैलम्** તેલ तैल, **स्यात्** ચિકિત્સા છે चिकित्सा है ॥१५॥

15 In disorders arising from sexuality the remedial measures indicated are:—the use medicated milk or ghee prepared with the life-promoter group af drugs: sudations inunctions and fomentations curative of vata, diet promotive of the seminal secretion, unctuous articles, oleation procedures, longevity promoting enemas (yapana-basti) and unctuous enemas. In conditions of the vitiation of the urine or pain in the bladder, oil prepared with milk and drugs of the ticktrefoil group and the life-promoter group

मुस्ताद्यो યાપનબસ્તિઃ —

**यापनाश्च बस्तयः सर्वकालं देयाः; तानुपदेक्ष्यामः— मुस्तोशीरबलारग्वधरास्नामञ्जिष्ठाकटुरोहिणीत्रायमाणापुनर्नवाबिभीतकगुडूचीस्थिरादिपञ्चमूलानि पलिकानि खण्डशः कल्पानामष्टौ च मदनफलानि प्रक्षाल्य जलाढके परिकाथ्य पादशेषो रसः क्षीरद्विप्रस्थसंयुक्तः पुनः शृतः**

१५. मूत्रवैकृतवस्तिशूलेषु चोत्तरवस्तिः -मूत्रवैकृते वस्तिशूलैः (थ)
,, ,, ,, —मूत्रकृच्छ्रवस्तिशूलेषु (क.)
,, जीवनीयक्षीर—जीवनीयगणक्षीर (ब.)

१६-(१). पुनः शृतः—पुनः पुनः (ब.)

**क्षीरावशेषः पादजाङ्गलरसस्तुल्यमधुघृतः शतकुसुमामधुककुटजफलरसाञ्जनप्रियङ्गुकल्कीकृतः ससैन्धवः सुखोष्णो बस्तिः शुक्रमांसबलजननः क्षतक्षीणकासगुल्मशूलविषमज्वरब्रध्न(वर्ध्म)कुण्डलोदावर्तकुक्षिशूलमूत्रकृच्छ्रासृग्दरजोविसर्पप्रवाहिकाशिरोरुजाजानूरुजङ्घाबस्तिग्रहाश्मर्युन्मादार्शः-प्रमेहाध्मानवातरक्तपित्तश्लेष्मव्याधिहरः सद्यो बलजननो रसायनश्चेति (१);**

**यापनाः** યાપના यापना, **बस्तयः च** બસ્તિઓ बस्तियाँ, **सर्वकालम्** સર્વ કાલ सब कालमें, **देयाः** આપવી જોઈએ देनी चाहिएं, **तान्** તેઓનો इनको, **उपदेक्ष्यामः** ઉપદેશ કરશું कहेंगे, **मुस्त-** નાગર મોથ मोथा, **उशीर-** વીરણનો વાળો खस, **बला-** બલા बला, **आरग्वध-** ગરમાળો अमलतास, **रास्ना-** રાસ્ના बायसुरई, **मञ्जिष्ठा-** મજીઠ मंजीठ, **कटुरोहिणी-** કડુ कटुकी, **त्रायमाणा-** ત્રાયમાણ असवर्ग, **पुनर्नवा-** સાટોડી गदहपुरना, **बिभीतक-** બહેડાં बहेड़ा, **गुडूची-** ગળો गिलोय, **स्थिरादि-** સ્થિરાદિ शालपर्ण्यादि, **पञ्चमूलानि** પંચમૂળ पंचमूल, **पलिकानि** દરેક એક પલ प्रत्येक चार तोले, **खण्डशः** એઓના ટુકડા इनके टुकड़ों, **कल्पानि** કરી करके, **अष्टौ** અને આઠ और आठ, **मदनफलानि च** મીંઢળ मैनफल, **प्रक्षाल्य** ધોઈ નાખીને धोकर, **जलाढके** એક આઢક પાણીમાં २५६ तोले जलमें, **परिक्वाथ्य** ક્વાથ કરી पकाकर, **पादशेषः** ચતુર્થાંશ બાકી રહે ત્યારે चौथाई शेष रहने पर, **रसः** તે ક્વાથમાં उस क्वाथमें, **क्षीर-** દૂધ दूध, **द्विप्रस्थ-** બે પ્રસ્થ १२८ तोले, **संयुक्तः** નાખી डालकर, **पुनः** ફરીથી फिरसे, **क्षीरावशेषः** દૂધ બાકી રહે ત્યાં સુધી दूध शेष रहने तक, **शृतः** ઉકાળવો उबाले, **तुल्य** પછી તેમાં તેટલાં જ फिर उसमें उतने ही, **मधु-** મધ शहद, **घृतः** તથા ઘી નાખી तथा घी डालकर, **शतकुसुमा-** તેમજ સુવા एवं सोया, **मधुक-** જેઠીમધ मुलहठी, **कुटजफल-** ઇન્દ્રજવ इन्द्रजौ, **रसाञ्जन-** રસાંજન रसाञ्जन, **प्रियङ्गु** તથા ઘઉંલાનો तथा प्रियंगुका, **कल्कीकृतः** કલ્ક કરી कल्क कर, **ससैन्धवः** સૈંધવસહિત सेन्धानमकसहित, **पाद-** એકચતુર્થાંશ एकचतुर्थांश, **जाङ्गलरसः** જાંગલ પ્રાણીઓના માંસરસવાળી जांगल मांसरसवाली, **सुखोष्णः** નવશેકી सुखोष्ण, **बस्तिः** બસ્તિ દેવી बस्ति देनी चाहिए, **शुक्र-** આ બસ્તિ શુક્ર यह बस्ति शुक्र **मांस-** માંસ तथा मांस, **बल-** તથા બલને तथा बलका, **जननः** પેદા કરનાર છે जनक है, **क्षत-** ક્ષત क्षत, **क्षीण-** ક્ષીણ क्षीण, **कास-** કાસ कास, **गुल्म-** ગુલ્મ गुल्म, **शूल-** શૂલ शूल, **विषमज्वर-** વિષમ જ્વર विषम ज्वर, **ब्रध्न-** બ્રધ્ન ब्रध्न, **कुण्डल-** વાતકુંડલિકા वातकुंडलिका, **उदावर्त-** ઉદાવર્ત उदावर्त, **कुक्षिशूल-** કુક્ષિશૂલ कुक्षिशूल, **मूत्रकृच्छ्र-** મૂત્રકૃચ્છ્ર मूत्रकृच्छ्र **असृग्दरः** રક્તપ્રદર रक्तप्रदर, **विसर्प-** વિસર્પ विसर्प, **प्रवाहिका-** પ્રવાહિકા प्रवाहिका, **शिरोरुजा-** માથાની પીડા शिरदर्द, **जानु-** ઢીંચણ जानु, **ऊरु-** સાથળ ऊरु **जङ्घा-** પીંડી जंघा, **बस्ति-** તથા બસ્તિનું तथा बस्तिका, **ग्रह-** જકડાઈ જવું जकड़ा जाना, **अश्मरी-** અશ્મરી अश्मरी, **उन्माद-** ઉન્માદ उन्माद, **अर्शः-** અર્શ अर्श, **प्रमेह-** પ્રમેહ प्रमेह, **आध्मान-** આધ્માન आध्मान, **वातरक्त-** વાતરક્ત वातरक्त, **पित्त-** અને પિત્ત और पित्त, **श्लेष्म-** તેમજ કફના एवं कफके, **व्याधिहरः** રોગો એઓને મટાડનાર रोग इनका नाशक, **सद्यः** શીઘ્ર शीघ्र, **बलजननः** બલકારક बलकारक, **रसायनः च इति** તથા રસાયન છે तथा रसायन है ॥ १ ॥

16-(1). Yapana enemata may be given at all times as we shall now describe. Take 4 tolas each of nut grass, heart leaved sida, purging cassia, Indian groundsel, Indian madder, kurroa, zalil, hog's weed, beleric myrobalan, guduch and the pentaradices of the

१६-(१). क्षीरावशेषः पादजाङ्गलरसस्तुल्य मधुघृतः क्षीरावशेषस्तुल्यो जाङ्गलरसमधुघृतः (ख)

,, पादजाङ्गलरस --तुल्यो जाङ्गलरसः (ड.)

,, तुल्यमधुघृत --समधुघृतः (ड.)

,, शुक्रमांसबलजननः--शुक्रमांसाग्निबलजननः (क.)

,, शुक्रमांसबलजननः--शुक्रमांसाग्निजननः (ख)

,, मांसबलजननः--मांसाग्निबलजननः (ङ)

,, कासगुल्म--कासहिक्कागुल्म (क)

,, मूत्रकृच्छ्रासृग्दरजो-मूत्रकृच्छ्रासृग्दर (ख.)

,, प्रवाहिका--निर्वाहिका (ग.)

ticktrefoil group and having crushed them into little bits, decoct them together with eight emetic nuts which have been properly cleansed in 256 tolas of water, till the solution is reduced to one fourth the original quantity add to this solution 128 tolas of cow's milk; boil the whole gain till only the milk part remains. Add to this meat-juice of the jangala animals in measure one fourth the quantity of the milk; a d honey and ghee in equal quantities Add to this solution the paste of dill seed, liquorice, kurchi emetic nut, extract of Indian berberry and perfu med cherry. This solution, mixed with rock salt, should be given in congenially warm water as enema it is promotive of the seminal secretion, and flesh and curative of pectoral lesions, cachexia, cough, Gulma, colicky pain, irregular fever inguinal swelling, Kundala vata, misperistalsis acute pain in the stomach, dysuria, menorrhagia, acute spreading affections, dysenteric condition, pain in the head, in the knee the thigh, the calf and the bladder, urinary calculi, insanity, piles urinary anomalies, abdominal distension and disorders due to morbid vata, blood, pitta and kapha. This enema is also an immediate promoter of strength and vitaliy.

एरण्डमूलाद्यो यापनबस्तिः—

एरण्डमूलपलाशात् षट्पलं शालिपर्णीपृश्निपर्णी बृहती कण्टकारिका गोक्षुरको रास्नाऽश्वगन्धा गुडूची वर्षाभूरारग्वधो देवदार्विति पलिकानि खण्डशः कल्पानि फलानि चाष्टौ प्रक्षाल्य जलाढके क्षीरपादे पचेत्। पादशेषं कषायं पूतं शतकुसुमाकुष्ठमुस्तपिप्पलीहपुषाबिल्ववचावत्सकफलरसाञ्जनप्रियङ्गुयवानीप्रक्षेपकल्कितं मधुघृततैलसैन्धवयुक्तं सुखोष्णं निरूहमेकं द्वौ त्रीन् वा दद्यात्।

एरण्डमूल- એરંડાના મૂલ एरण्डमूल, पलाशात् ખાખરાનાં મૂળ ढाककी जड़, षट्पलम् ૭ પલ २४ तोले, शालिपर्णी શાલવણ सरिवन, पृश्निपर्णी પોઠવણ पृश्नीपर्णी, बृहती ઉભી ભોરીંગણી वनभाटा, कण्टकारिका બેઠી ભોરીંગણી छोटी कटेरी, गोक्षुरक ગોખરુ गोखरू, रास्ना રાસ્ના वायसुरई, अश्वगन्धा આસોંદ असगन्ध, गुडूची ગળો गिलोय, वर्षाभूः સાટોડી पुनर्नवा, आरग्वधः ગરમાળો अमलतास, देवदारु इति અને દેવદાર और देवदारु, पलिकानि દરેક એક પલ प्रत्येक ४–४ तोले, खण्डशः એઓના ટુકડા इनके टुकड़ों कल्पानि કરી करके, अष्टौ અને આઠ और आठ, फलानि च મીંઢળ मैनफल, प्रक्षाल्य ધોઈ નાખીને धोकर, जलाढके- એક આઢક જલમાં २५६ तोले जलमें, क्षीरपादे- તથા પા આઢક દૂધમાં નાખી और ६४ तोले दूधमें, पचेत् પકાવવાં पकाये, पादशेषम् ચતુર્થાંશ બાકી રહે ત્યારે चौथाई शेष रहने पर, कषायम् पूतम् તે કવાથને ગાળી उस क्वाथको छानकर, शतकुसुमा- તેમાં સુવા उसमें सोया, कुष्ठ- કઠ कूठ, मुस्त- નાગરમોથ मोथा, पिप्पली- પીપર पिप्पली, हपुषा- હાઉબેર हाऊबेर, बिल्व- બીલું बेल, वचा- વજ वच, वत्सकफल- કડા कुड़ा, रसाञ्जन- રસાંજન रसौंत, प्रियङ्गु- ઘઉંલા प्रियङ्गु, यवानी- અને અજમો એઓનો और अजवायन इनका, प्रक्षेप-कल्कितम् કલ્ક નાખી कल्क डालकर, मधु- મધ शहद, घृत- ઘી घी, तैल- તેલ तैल, सैन्धव- તથા સૈંધવથી तथा सेंधानमकसे, युक्तम् યુક્ત કરી मिलाकर, एकम् એક एक, द्वौ- બે दो, त्रीन् वा અથવા ત્રણ अथवा तीन, निरूहम् નિરૂહબસ્તિ निरूह बस्ति, दद्यात् દેવી देवे।

१४०-(२). शतकुसुमा—शतकुसुमादि (ह.)
„ „ —शतकुसुमादिकल्कितं (म.)
„ यवानीप्रक्षेप—यमानीसंक्षेप (ह.)

16 (1) Take twentyfour tolas of castor and palas and four tolas each of tick trefoil, painted-leaved uraria Indian nightshade, yellow-berried nightshade, small caltrops, Indian groundsel, winter cherry, guduch, hog's weed, purging cassia and deodar; triturate all these into small bits and decoct them together with eight well cleansed emetic nuts, in 250 tolas of water and one fourth that quantity of milk. when the solution is reduced to onefourth its original quantity, it should be taken down and filtered. Add to this the paste of dillseed, costus nut-grass long pepper, juniper, bael, sweet-flag, kurchi, emetic nut, extract of Indian berberry, perfumed cherry and barley, as also honey, ghee til oil and rock-salt with the solution thus obtained an evacuative enema in congenially warm condition should be given once, twice or thrice as the case requires.

**सर्वेषां प्रशस्तो विशेषतो ललितसुकुमारस्त्रीविहारक्षीणक्षतस्थविरचिराशसामपत्यकामानां च ( २ );**

सर्वेषाम् આ બસ્તિ સઘળા માટે सबके लिए, विशेषतः અને વિશેષ કરીને और विशेष करके, ललित- લલિત ललित, सुकुमार- સુકુમાર सुकमार, स्त्रीविहार- સ્ત્રીની સાથેના વિહારથી स्त्रीविहारसे, क्षीण- ક્ષીણ क्षीण, क्षत- ક્ષતવાળા क्षत, स्थविर- વૃદ્ધ वृद्ध, चिरार्शसाम् લાંબા વખતના અર્શના રોગી दीर्घ अर्शरोगी, अपत्यकामानाम् च અને સંતાનની કામનાવાળાઓને માટે तथा अपत्यकी कामनावालोंके लिए, प्रशस्तः પ્રશસ્ત છે प्रशस्त है (२);

16 (2) This enema is beneficial in all conditions and especially for the aristocrats the emaciated and those suffering from pectoral lesions as a result of sex indulgence, the aged, and those suffering from chronic piles and those who are desirous of progeny.

सहचराद्यो यापनबस्तिः —

**तद्वत सहचरबलादर्भमूलसारिवासिद्धेन पयसा ( ३ );**

तद्वत् તે જ પ્રમાણે इसी प्रकार, सहचर- આસમાની ફૂલનો કાંટાશેળિયો नीलपुष्पवाली कटसरैया, बला- બલા बला, दर्भमूल દર્ભનાં મૂળ दर्भके मूल, सारिवा- તથા સારિવાથી तथा कपूरीसे, सिद्धेन પકાવેલ सिद्ध, पयसा દૂધની બસ્તિ આપવી दूधकी बस्ति देवे (३);

16-(3). An enema may be similarly prepared with crested purple nail dye, heart-leaved sida, roots of sacrificial grass and Indian sarsaparilla and with milk.

बृहत्याद्यो यापनबस्तिः —

**तथा बृहतीकण्टकारीशतावरीच्छिन्नरुहाश्रृतेन पयसा मधुकमदनपिप्पलीकल्कितेन पूर्ववद्बस्तिः ( ४ );**

१६-(२) सर्वेषां - स सर्वेषां (ग)

,, चिराशसामपत्यकामानांच चिरार्शोमूत्रकृच्छ्रोदावर्तग्र-हणीदोषाश्मरीणां हितोऽपत्यकामानां च (क.)

,, ,, —चिरार्शोमूत्रकृच्छ्रोदरगुल्मकर्मोदावर्तग्रहणी-दोषाश्मरीणां हितोऽपत्यकामानां च (ग.)

१६-(३). दर्भमूल—मूर्वामूल (ङ. त.)

१६ (४). कल्कितेन—कल्ककृतेन (ख. ङ.)

,, ,, —कल्कप्लुतेन (ग.)

,, ,, —कल्कीकृतेन (ग. च. ढ.)

तथा तथा तथा, मधुक- જેઠીમધ मुलहठी, मदन- पिप्पली મીંઢળનાં બીજના मैनफलके बीजके, कल्कितेन- કલ્કયુક્ત कल्कसे युक्त, बृहती- ઉભી ભોરીંગણી वनभाटा, कण्टकारी- બેઠી ભોરીંગણી छोटी कटेरी, शतावरी- શતાવરી शतावर, छिन्नरुहा- અને ગળોથી और गिलोयमें, शृतेन પકાવેલા सिद्ध किये हुए, पयसा દૂધની दूधकी, बस्तिः બસ્તિ बस्ति, पूर्ववत् પુર્વોક્ત વિધિ પ્રમાણે દેવી पूर्वोक्त विधिके अनुसार देवे (४);

16·(4). Likewise, an enema may be prepared in the foregoing manner from Indian nightshade, yellow-berried nightshade, climbing asparagus and guduch in milk, along with the paste of liquorice, emetic nut and long pepper.

प्रथमो बलाद्यो यापनबस्तिः —

**तथा बलातिबलाविदारीशालपर्णीपृश्निपर्णीबृहतीकण्टकारिकादर्भमूलपरूषककाश्मर्यबिल्वफलयवसिद्धेन पयसा मधुकमदनकल्कितेन मधुघृतसौवर्चलयुक्तेन कासज्वरगुल्मप्लीहार्दितस्त्रीमद्यक्लिष्टानां सद्योबलजननो रसायनश्च (५);**

तथा તથા तथा, मधुक- જેઠીમધ मुलहठी, मदन- અને મીંઢળના मैनफलके, कल्कितेन- કલ્ક कल्क, मधु- તથા મધ तथा शहद, घृत- ઘી घी, सौवर्चल- અને સંચળથી યુક્ત और सौंचलनमकसे युक्त, बला- બલા बला, अतिबला- ખપાટ कन्घी, विदारी- ભોયકોળું बिलाईकन्द, शालिपर्णी- શાલવણ सरीवन, पृश्निपर्णी- પીઠવણ पृश्निपर्णी, बृहती- ઉભી ભોરીંગણી वनभाटा, कण्टकारिका- બેઠી ભોરીંગણી छोटी कटेरी, दर्भमूल- દાભનાં મૂલ दर्भमूल, परूषक- ફાલસા फालसा, काश्मर्य- શીવણ गम्भार, बिल्वफल- બીલાં बेलगिरी, यव- અને જવથી और जौसे, सिद्धेन- પકાવેલ पकाये हुए, पयसा દૂધની બસ્તિ दूधकी बस्ति, कास- કાસ खांसी, ज्वर- જ્વર ज्वर, गुल्म- ગુલ્મ गुल्म, प्लीहार्दित- પ્લીહા, અર્દિત प्लीहा, अर्दित, स्त्रीमद्य- સ્ત્રી તથા મદ્યથી स्त्री तथा मद्यसे, क्लिष्टानाम् ક્ષીણ થયેલાઓને માટે कर्शितके लिए, सद्यः सद्य शीघ्र, बलजननः બલ દેનાર बलजनक, रसायनः च અને રસાયન છે और रसायन है (५);

16·(5) Likewise, an enema may be prepared from heart-leaved sida, evening mallow, white yam tick-trefoil, painted leaved uraria, Indian nightshade, yellow-berried nightshade, roots of sacrificial grass, sweet falsah, white teak, bael, emetic nut and barley in milk, with the paste of liquorice and emetic nut and mixed with honey, ghee and sanchal salt. These enemas are indicated in the case of those who are suffering from cough, fever, Gulma, splenic disorder, facial paralysis and the effects of indulgence in sex and urine. They are immediate promoters of strength and vitalization.

द्वितीयो बलाद्यो यापनबस्तिः —

**बलातिबलारास्नारग्वधमदनबिल्वगुडूचीपुनर्नवैरण्डाश्वगन्धासहचरपलाशदेवदारुद्विपञ्चमूलानि पलिकानि यवकोलकुलत्थद्विप्रसृतं शुष्कमूलकानां च जलद्रोणसिद्धं निरूहप्रमाणावशेषं कषायं पूतं मधुकमदनशतपुष्पाकुष्ठपिप्पलीवचावत्सकफलरसाञ्जनप्रियङ्गुयवानीकल्कीकृतं गुडघृततैलक्षौद्रक्षीरमांसरसाम्लकाञ्जिकसैन्धवयुक्तं सुखोष्णं बस्तिं दद्याच्छुक्रमूत्रवर्चःसङ्गेऽनिलजे गुल्म-**

१६·(५). दर्भमूलपरूषककाश्मर्यबिल्वफलयवसिद्धेन - दर्भमूलयवकाश्मर्यबिल्वफलसिद्धेन (क.)

,, परूषक-यवपरूषक (ग.)

,, परूषककाश्मर्य-यवकाश्मर्य (क्ष. ड.)

१६·(६). अश्वगन्धा-सुमना (ध.)

,, शुष्कमूलकानां च जलद्रोणसिद्धं-शुष्कमूलकानि च पलिकानि (ध. फ.)

,, जलद्रोणसिद्धं निरूहप्रमाणावशेषं-जलद्रोणे सिद्धं निरूहप्रमाणशेषं (ध)

हृद्रोगाध्मानब्रध्नपार्श्वपृष्ठकटीग्रहसंज्ञानाशबलक्षयेषु च (६);

बला- બલા बला, अतिबला- ખપાટ कंघी, रास्ना- રાસ્ના वायसुरई, आरग्वध- ગરમાળો अमलतास, मदन- મીંઢળ मैनफल, बिल्व- બીલાં बेल, गुडूची- ગળો गिलोय पुनर्नवा- સાટોડી गदहपुरना, एरण्ड- એરંડો एरण्ड, अश्वगन्धा- આસોંદ असगन्ध, सहचर- આસમાની ફૂલનો કાંટાશેળીયો नीलपुष्पवाली कटसरैया, पलाश- ખાખરો ढाक, देवदारु- દેવદાર देवदारु, द्विपञ्चमूलानि દશમૂળ दशमूल, पलिकानि દરેક એક એક પલ चार चार तोले, यव-कोल- યવ, બોર, जौ, बेर, कुलत्थ- અને કળથી कुलथी, द्विप्रसृतम् બે બે પ્રસૃત १६-१६ तोले, शुष्कमूलकानाम् च તેમજ સૂકા મૂળા બે પ્રસૃત एवं सूखी मूली १६ तोले, जलद्रोण એક દ્રોણ પાણીમાં १०२४ तोले जलमें, सिद्धम् પકાવવાં पकावे, निरूह- નિરૂહ-બસ્તિ निरूहबस्तिके प्रमाण- જેટલા प्रमाणमें, अवशेषम् कषायम् ક્વાથ બાકી રહે ત્યારે क्वाथके अवशिष्ट रहने पर, पूतम् ગાળી લઈ छानकर, मधुक- તેમાં જેઠીમધ मुलहठी, मदन- મીંઢળ मैनफल, शतपुष्पा- સુવા सोया, कुष्ठ- કઠ कूठ, पिप्पली- પીપર पिप्पली, वचा- વજ बच, वत्सकफलम् ઇન્દ્રજવ इन्द्रजौ, रसाञ्जन- રસાંજન रसौंत, प्रियङ्गु- ઘઉંલા प्रियंगु, यवानी- અને અજમાનો और अजवायनका, कल्कीकृतम् કલ્ક નાખી कल्क डालकर, गुड- ગોળ गुड, घृत- ઘી घी, तैल- તેલ तैल, क्षौद्र- મધ शहद, क्षीर- દૂધ दूध, मांसरस- માંસરસ मांसरस, अम्लकाञ्जिक- ખાટી કાંજી खट्टी कांजी, सैन्धवयुक्तम् તથા સૈન્ધવથી યુક્ત तथा सैन्धवसे युक्त, सुखोष्णम् નવશેકી सुखोष्ण, बस्तिम् બસ્તિ बस्ति, अनिलजे વાતજ वातज, शुक्र- શુક્ર शुक्र, मूत्र- મૂત્ર मूत्र, वर्चः- તથા ઝાડાની तथा पुरीषकी, सङ्गे અટકાયત रुकावट, गुल्म- ગુલ્મ गुल्म, हृद्रोग- હૃદ્રોગ हृद्रोग, आध्मान આધ્માન आध्मान, ब्रध्न બ્રધ્ન ब्रध्न पार्श्व- પડખાં पार्श्व, पृष्ठ- પીઠ पृष्ठ, कटी- તેમજ કેડનું एवं कटीकी, ग्रह- ઝલાઈ જવું जकडाहट, संज्ञानाश- સંજ્ઞાનાશ संज्ञानाश, बलक्षयेषु च અને બલની ક્ષીણતા એઓમાં और बलक्षय इनमें, दद्यात् આપવી देवे (६);

16 (6). Take four tolas each of heart-leaved sida, evening mallow, Indian groundsel, purging cassia emetic nut, bael, guduch, hog's weed, castor, winter cherry, crested purple nail dye, palas, deodar and the two kinds of pentaradices and 16 tolas of barley, Indian jujube, horsegram and dried garden radish. This should be boiled in 1024 tolas of water and when the decoction is reduced to the quantity prescribed for an evacuative enema, it should be taken down and filtered. Add to it the paste of liquorice, emetic nut, dill-seed costus long pepper, sweet flag, kurchi emetic nut, extract of Indian berberry, perfumed cherry and bishop's weed, as also gur, ghee, oil, honey, milk, meat juice, sour conjee and rock-salt. This solution should be given as a congenially warm enema in conditions of the retention of semen, urine and feces due to morbidity of vata, as also in conditions of gulma, heart-disease, abdominal distension, inguinal swellings, spasticity of the sides, back and waist, loss of consciousness and loss of strength.

हपुषाद्यो यापनबस्तिः —

हपुषार्धकुडवो द्विगुणार्धक्षुण्णयवः क्षीरोदकसिद्धः क्षीरशेषो मधुघृततैललवणयुक्तः सर्वाङ्गविसृतवातरक्तकविण्मूत्रस्त्रीखेदितहितो वातहरो बुद्धिमेधाग्निबलजननश्च (७);

---

१२(७). लवणयुक्तः- लवणयुक्तो बस्तिः (क त.)

